## द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

# शुद्धिपत्रम्

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | १७ | ह्रस्वादोर्घसंज्ञाः | ह्रस्वदीर्घसंज्ञाः |
| ३८ | १८ | इत्यैतानि | इत्येतानि |
| ४२ | ११ | यथा—ग्टहोतं | यथाग्टहोतं |
| ४८ | ५ | उदात्तस्वरितो परौ | उदात्तस्वरितपरौ |
| ८८ | १५ | पुवित | पुर्विति |
| १०८ | ८ | 'नो, नु' कल्पेषु | 'नो, नु, कल्पेषु' |
| १११ | ८ | इत्यादिषु, | इत्यादिषु |
| १२० | ११ | पादयारष्ठमक्षरं | पादयोरष्टममक्षरं |
| १२७ | २२ | व्रष्णाग्र | वृष्णाग्र |
| १३५ | ५ | श्रुया: | श्रूया: |
| १४२ | ११ | पूर्वपदस्यान्ते | पूर्वपदस्यान्तेग्र |
| १८० | ६ | असोकुमार्य्येषं | असोकुमार्य्यं |
| २२३ | १६ | उपजगतो | उपजगतो |
| २२८ | ७ | 'न व तत्र' | 'न वै तत्र' |
| २३८ | ६ | सरुपे | सरूपे |
| ,, | १३ | सरुपे | सरूपे |
| २४५ | १४ | द्वो | द्वौ |
| ,, | १५ | उद्दचोन्द्रवेव गोपा | उद्दचोन्द्र देवगोपा |
| ,, | १८ | प्रगाथै | प्रगाथौ |
| १८।१६ | २१ | ऋ॰ १।५२।१२-१३ रजसोव्योमन् | रजसो व्योमन् (ऋ॰ १।५२।१२-१३ ), |
| २४८ | १४ | ष्ठपदासु | ष्टपदासु |
| २५१ | १६ | द्वग्रचो | द्व्यृचो |

ॐ

॥ नमः श्रीगणेशाय ॥

# ऋक् प्रातिशाख्यम् ।

## प्रथमोऽध्यायः ।

### प्रथमं पटलम् ।

परावरे ब्रह्मणि यं सदाहु

वेदात्मानं वेदनिधिं मुनीन्द्राः ।

तं पद्मगर्भं परमं त्वादिदेवं

प्रणम्यर्चां लक्षणमाह शौनकः ॥ १ ॥

शास्त्रादौ इष्टसिद्ध्यर्थं ब्रह्माणं नमस्करोति आचार्य्यः परावर इति । ऋचामिति ऋचां मन्त्राणां लक्षणं स्वरवर्णाक्षरमात्रादिलक्षितम् । 'ऋचां लक्षणमाह' इतीयमाचार्य्यस्य प्रतिज्ञा ।

माण्डुकेयः संहितां वायुमाह

तथाकाशं चास्य माण्डव्य एव ।

समानतामनिले चाम्बरे च

मत्वागस्त्योऽविपरिहारं तदेव ॥ २ ॥

शास्त्रप्रयोजनमाह माण्डुकेय इति—माण्डुकेयः आचार्य्यः । माण्डुकेय आचार्य्यो भगवान् संहितां द्यावापृथिव्योः संहितां वायुमाह

ब्रवीति। तथा तयोरेव द्यावापृथिव्योः आकाशञ्च संहितामस्य उपासनस्य माण्डव्यो नामाचार्य्य इच्छति। समानतां समाने तुल्ये एते संहिते अनिले चाम्बरे च एवं मत्वा आगस्त्यः अगस्त्यपुत्रः अविपरिहारं तदेव दत्तवान्। तदेव नान्यदित्यर्थः।

अध्यात्मक्लृप्तौ शूरवीरः सुताश्च
वाङ्मनसयोर्विवदन्त्यानुपूर्व्या।
सन्धेर्विवर्त्तनं निर्भुजं वदन्ति
शौद्धाक्षरोच्चारणाञ्च प्रतृण्णम् ॥ ३ ॥

अध्यात्मक्लृप्तौ अध्यात्मविषये क्लृप्तिः कल्पना तस्यां वाङ्मनसयोरानुपूर्व्यं क्रमे विवदन्तः विवादं कुर्वन्तः शूरवीरस्तन्नामा आचार्य्यः सुताश्च तत्पुत्राश्च। कथम्—वाक् पूर्वरूपम्, मन उत्तररूपमिति। अपरस्तद्विपरीतमाह—मनः पूर्वरूपं, वाक् उत्तररूपम् इति।

अथेदानीं संहिता-पद-क्रमस्वरूपमाह सन्धेरित्यादि। निर्भुज-संहिताध्ययनमुच्यते—सन्धेर्विवर्त्तनम् अविच्छेदाध्ययनं तत् निर्भुजं वदन्ति आचार्य्याः।

शुद्धाक्षरोच्चारणं शुद्धयोः द्वयोः पदयोः अक्षरयोः वा सन्धिमकुर्वता यदुच्चारणम् अभिव्याहरणं क्रियते तत् प्रतृण्णं पदाध्ययनमुच्यते।

उभयमन्तरेणोभयं व्याप्तमग्रे
परे कामा अन्ननाकोभयाख्याः।
प्राणः षकारे यच्च बलं णकारे
वाक्प्राणयोर्यश्च होमः परस्परम् ॥ ४ ॥

उभयं संहितां पदञ्च इत्यर्थः व्याप्तम् उभयमन्तरेण क्रमाध्ययनेन

अग्रे प्रथममेव। तथा परे कामाः पराः श्रेष्ठाः कामा ये उक्ताः अन्न-कामः, नाककामः, उभयकामश्च इति यावत्। एतत् सर्वं विज्ञेयमिति परश्लोकेनान्वयः।

प्राणस्य षकार इति संज्ञा 'षकारः प्राण आत्मा' इति श्रुतिः। यच्च णकारेण हि बलवती संहिता भवति। श्रूयते च 'स यो हैतौ णकारषकारावनुसंहितम् ऋचो वेद सबलां सप्राणां संहितां वेदायुष्य-मिति विद्यात्' इति (ऐ. आ. ३।२।६) वाक्प्राणयोर्यश्च परस्परं होमः स च विज्ञेय इति शेषः। वाचि प्राणो हूयते प्राणे च वाक् हूयते। तथाचोक्तम्—'तद् यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति। वाक् तदा प्राणं रेलिह। अथ यत्र तुष्णीं वा भवति स्वपिति वा प्राणि तदा वाग् भवति। प्राणस्तदा वाचं रेलिह'। इति (ऐ. आ. ३।१।६।१४)

गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च।
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः॥ ५ ॥

स्वरितोदात्तनीचत्वं श्वासो नादस्तथोभयम्।
एतत् सर्व्वं च विज्ञेयं छन्दोभाषामधीयता॥ ६ ॥

छन्दोभाषामधीयता वेदमधीयता इत्यर्थः यथास्थानमत्र ग्रन्थे वक्ष्यमाणं एतत् सर्वं विज्ञेयं वेदितव्यमित्यर्थः।

छन्दसां ज्ञानमाकारं भूतज्ञानं
छन्दसां व्याप्तिं स्वर्गामृतत्वप्राप्तिम्।
अस्य ज्ञानार्थमिदमुत्तरत्र
वक्ष्ये शास्त्रमखिलं शैशिरीये॥ ७ ॥

छन्दसां गायत्र्यादीनां ज्ञानम्। छन्दसामाकारं श्वेतादि। भूतज्ञानं स्वरूपज्ञानम् छन्दसाम्। तथा च छन्दसां व्याप्तिं 'गुर्वक्षराणां गुरुर्व्याप्ति सर्व्वम्' (१८।३३) इत्यादि। स्वर्गामृतत्वप्राप्तिं छन्दोज्ञानात् स्वर्गप्राप्तिरमृतप्राप्तिश्च भवति। यथा—'स्वर्गं जयतीत्रभिरथामृतत्वम्' (१८।३४)। अस्य 'माण्डूकेयः संहितां वायुमाह' (१।२—७) इत्यादेरनुक्रान्तस्य ज्ञानार्थम् इदं शास्त्रम् अखिलं कृत्स्नमुत्तरत्र वक्ष्ये। शैशिरीये शैशिरीयायां संहितायामित्यर्थः। पुराणे चोक्तम्—

"मुद्गलो गोखलो वात्सः शैशिरः शिशिरस्तथा।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः॥"
तथा च ऋग्वेदे शैशिरीयायां संहितायामित्यर्थः।

**पदक्रमविभागज्ञो वर्णक्रमविचक्षणः।**
**स्वरमात्राविशेषज्ञो गच्छेदाचार्य्यसंपदम्॥ ८॥**

पदानां क्रमस्य च पदाध्ययनस्य क्रमाध्ययनस्य च विभागो विविधो भागो विभागः एवं यो जानाति स पदक्रमविभागज्ञः। वर्णक्रमविचक्षणः संहिताध्ययनविचक्षण इत्यर्थः। स्वरमात्राविशेषज्ञः स्वराश्च उदात्तादयः मात्राश्च ह्रस्वादयः एवं विशेषं यो जानाति स आचार्य्यसम्पदमाचार्य्यत्वं गच्छेत् आचार्य्यकार्य्यं कुर्य्यादित्यर्थः। एतज्ज्ञानाभावे आचार्य्यत्वकरणे अधिकारो न भवति इति भावः।

**अकारऋकारावि उ ए ओ ऐ औ**
**पदाद्यन्तयोर्नल्कारः स्वरेषु।**
**अकारादीन् दीर्घरूपान् द्वितीयान्**
**ह्रस्वेषु पञ्चस्वपि तानि सन्ति॥ ९॥**

शास्त्रसंव्यवहारार्थं वर्णक्रमार्थं च अक्षरसमाम्नायमाह। अकारश्च ऋकारश्च 'अकारर्कारौ' अ ऋ इति। अथेकारश्च उकारश्च एकारश्च ओकारश्च ऐकारश्च औकारश्चेति 'इ उ ए ओ ऐ औ' इति। पदस्यादौ अन्ते च ऌकारवर्णः स्वरेषु न गृह्यते। पदमध्ये तु भवेदिति वेदितव्यम्।

अकारादयो ह्रस्वा उक्ताः, तेषु तेषु ह्रस्वेषु आकारादयो दीर्घरूपाः। तान् द्वितीयान् ह्रस्वेषु विजानीयात्। अकारो ह्रस्व आकारो दीर्घो द्वितीयो वेदितव्य इत्यर्थः। एवमन्यत्र ऋकारादिषु।

पञ्चस्वपि ह्रस्वेषु अ इ उ ऋ ऌ इत्येतेषु इति यावत् तानि दीर्घाणि भवन्तीत्यर्थः।

कखौ गघौ ङ चछौ जझौ ञ
टठौ डढौ ण तथौ दधौ न।
पफौ बभौ म यरलवा हशषसा—
अः ≍क ≍प अं इति वर्णराशिः क्रमश्च॥१०

अः इति विसर्जनीयः। ≍क इति जिह्वामूलीयः। ≍प इति उपध्मानीयः। अं इत्यनुस्वारः। इति वर्णराशिः क्रमश्च इत्येवमुक्तप्रकारेण वर्णराशिर्वेदितव्यः आकाराद्यनुनासिकान्त इति यावत्। वर्णक्रमश्चायमेव वेदितव्यः। तथाच 'ऋकारादयो दश नामिनः स्वराः' (१।२७) 'परेष्वैकारमोजयोः। ओकारं युग्मयोः' (२।७) इत्येवमादिषु अयमेव क्रमो वेदितव्यः।

अष्टौ समानाक्षराण्यादितस्तत-
श्चत्वारि सन्ध्यक्षराण्युत्तराणि।
एते स्वरा इपरो दीर्घवत्प्लुतो
ऽनुस्वारो व्यञ्जनं वा स्वरो वा॥११॥

आदित आरभ्य वर्णसमाम्नायस्याष्टाक्षराणि—अ आ ऋ ॠ इ ई उ ऊ इत्येतानीति यावत् समानाक्षरसंज्ञानि भवन्ति।

तत स्तेभ्यः समानाक्षरेभ्य उत्तराणि चत्वारि ए ओ ऐ औ इत्येतानीति यावत् सन्ध्यक्षरसंज्ञकानि भवन्ति। अकारस्य इवर्णोवर्णाभ्यां सह सन्धौ यानि अक्षराणि निष्पद्यन्ते तानि तथोच्यन्ते। (१३।१६ द्रष्टव्यः)।

'एते स्वराः'—य एते समानाक्षरसन्ध्यक्षरसंज्ञा वर्णास्ते एते द्वादश स्वरसंज्ञा वेदितव्याः। उदात्तानुदात्तस्वरितप्रचया एष्वक्षरेषु स्थिताः स्वर्य्यन्ते पठ्यन्ते इति स्वराः।

'इपरो दीर्घवत्प्लुतः'—इकारपरः प्लुतो दीर्घवत् प्रत्येतव्यः। यथा ईकार इतिना सह सन्धौ दीर्घमेकमीकारं निरनुनासिकमापद्यते, तथायमपि प्लुत ईकारं निरनुनासिकमापद्यते इत्यर्थः। तथा क्रमसंहितायां परिग्रहस्य पूर्ववचने ईत्वभूतो भवति द्वितीयेऽनुनासिकस्त्रिमात्रः। यथा विन्दतीति विन्दतीँ३'।

'अनुस्वारो व्यञ्जनं वा स्वरो वा'—अं इत्यनुस्वारो वर्णसमाम्नाये पठ्यते स कांश्चित् स्वरधर्म्मान् गृह्णाति, कांश्चिच्च व्यञ्जनधर्म्मान्। तद् यथा—ह्रस्वत्वं दीर्घत्वं प्लुतत्वमुदात्तत्वानुदात्तत्वं स्वरितत्वमिति स्वरधर्म्माः; तथा अर्द्धमात्राकालता स्वरवशेनोदात्तता अनुदात्तता स्वरितता संयोगश्चेति व्यञ्जनधर्म्माः।

**सर्व्वः शेषो व्यञ्जनान्येव तेषाम्**

**आद्याः स्पर्शाः पञ्च ते पञ्चवर्गाः।**

**चतस्रोऽन्तःस्था स्तत उत्तरेऽष्टा**

**ऊष्माणोऽन्त्याः सप्त तेषामघोषा ॥ १२ ॥**

'सर्व्वः शेषो व्यञ्जनान्येव'—उपर्य्युक्तेतरवचनः शेषशब्दः।

स्वरानुस्वारव्यतिरिक्ता सर्वः शेषो वर्णराशिः व्यञ्जनसंज्ञको वेदितव्यः। व्यञ्जयन्ति प्रकटीकुर्वन्ति अर्थानिति व्यञ्जनानि।

'तेषामाद्याः स्पर्शाः'—तेषां व्यञ्जनानामाद्या वर्णाः कादयो मान्ता इति यावत् स्पर्शसंज्ञा वेदितव्याः। स्पृष्टकरणाः स्पर्शाः।

ते च स्पर्शा पञ्चवर्गाः। पञ्चभिः स्पर्शैर्वर्ग एषाम् इति पञ्चवर्गाः। कियन्तस्ते वर्गाः इति पञ्चवर्गाः। यथा—क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द ध न, प फ ब भ म।

ततस्तेभ्यः स्पर्शेभ्योऽनन्तराः चतस्रः य र ल व इत्येताः अन्तःस्थसंज्ञका वेदितव्याः। स्पर्शोष्मणामन्तः मध्ये तिष्ठन्तीति अन्तःस्थाः।

अन्तःस्थेभ्य उत्तरे अष्टौ ऊष्माणो वेदितव्याः। ऊष्मा वायुस्तत्प्रधाना वर्णा ऊष्माणः। यथा—ह श ष स अः ≍क ≍प अं इति।

तेषामेवोष्मणाम् अन्त्याः सप्त ऊष्माणः अघोषसंज्ञा वेदितव्याः। यथा—श ष स अः ≍क ≍प अं इति।

वर्गे वर्गे च प्रथमावघोषौ
युग्मौ सोष्माणावनुनासिकोऽन्त्यः।
तस्मादन्यमवसाने तृतीयं
गार्ग्यः स्पर्शं प्रथमं शाकटायनः॥ १३॥

वर्गे वर्गे प्रतिवर्गं प्रथमद्वितीयौ वर्णौ अघोषसंज्ञौ वेदितव्यौ। यथा—कख चछ टठ तथ पफ इति। पारिशेष्यादन्यानि व्यञ्जनानि घोषवत्संज्ञानि।

वर्गे वर्गे च युग्मौ द्वितीयचतुर्थौ वर्णौ सोष्माणौ वेदितव्यौ। ऊष्मा वायुस्तेन सह वर्त्तन्ते इति सोष्माणः। यथा—खघ छझ ठढ थध फभ इति।

प्रतिवर्गम् अन्त्यवर्णोऽनुनासिकसंज्ञो वेदितव्यः। यथा—ङ ञ ण

न म इति। नासिकामनु यो वर्णो निष्पाद्यते स्वस्थानमुपादाय स द्विस्थानोऽनुनासिक इत्युच्यते तथा चोक्तं "मुखनासिकावचनोऽनुनासिक" इति।

तस्मादनुनासिकादन्त्यात् स्पर्शात् अन्यं पदावसाने वर्त्तमानं स्पर्शं गार्ग्य आचार्यः स्वं तृतीयं मन्यते। वाग्, षड्, तद्, ककुब् इत्यादि।

शाकटायन आचार्यः स्वं प्रथमं मन्यते। यथा—वाक्, षट्, तत्, ककुप् इत्यादि।

ओजा ह्रस्वा सप्तमान्ताः स्वराणाम्
अन्ये दीर्घा उभये त्वक्षराणि।
गुरूणि दीर्घाणि तथेतरेषां
संयोगानुस्वारपराणि यानि॥ १४॥

स्वराणां मध्ये सप्तमान्ताः सप्तमपर्य्यन्ता ओजा विषमा वर्णा ह्रस्वसंज्ञा वेदितव्याः। यथा—अ ऋ इ उ इति।

ह्रस्वसंज्ञकेभ्यो ये अन्ये स्वरा अतएव समाः ते दीर्घा दीर्घसंज्ञा वेदितव्याः। यथा—आ ॠ ई ऊ ए ओ ऐ औ इति।

ये त्विह ह्रस्वादीर्घसंज्ञाः स्वरा निर्द्दिष्टाः, यौ च वक्ष्यमाणौ स्वरौ "धातौ स्वरः कल्पयताव्लृकारः" (१३।१४) इति, "तिस्रः प्लुत उच्यते स्वरः" (१।१६) इति च एते उभये तु अक्षरसंज्ञा वेदितव्याः। यथा—अ आ ऋ ॠ इ ई उ ऊ ए ओ ऐ औ इति ऌ ई३ इति च।

यानि दीर्घाण्यक्षराणि तानि गुरुसंज्ञकानि वेदितव्यानि। प्लुतस्याप्यत्र ग्रहणं कर्त्तव्यम्। यथा—आ ॠ ई ऊ ए ऐ ओ औ इति ई३ इत्यादि च।

यथा दीर्घाणि अक्षराणि गुरुसंज्ञकानि भवन्ति तथा इतरेषां

ह्रस्वानामक्षराणां मध्ये यानि संयोगपराणि यानि चानुस्वारपराणि तानि गुरुसंज्ञकानि भवन्ति।

अनुस्वारो व्यञ्जनं चाक्षराङ्गं
स्वरान्तरे व्यञ्जनान्युत्तरस्य।
पूर्व्वस्यानुस्वारविसर्जनीयौ
संयोगादिर्वा च परक्रमे द्वे ॥१५॥

अनुस्वारो व्यञ्जनम् च अक्षराङ्गम् अक्षरमा स्वरस्याङ्गम्। यथा—'प्र' इत्यत्र पकाररेफौ अकारस्याङ्गम्। अङ्गसंज्ञायाः प्रयोजनं—यानि यस्य स्वरस्याङ्गभूतानि तानि तेनैव स्वरेण समानस्वराणि भवन्ति। यथा—"अयं देवाय जन्मने (ऋ॰ १।२०।१)" इत्यत्र एकारस्य अनुदात्तत्वात् टकारोऽनुदात्तवत् श्रूयते।

स्वरयोरन्तरे यानि व्यञ्जनानि तानि उत्तरस्यैवाङ्गं भवन्ति, न तु पूर्वस्य। यथा—अयम् इत्यत्र अयंशब्दस्यान्तोदात्तत्वाद् यकार उदात्तवच्छ्रूयते।

अनुस्वारविसर्जनीयौ तु स्वरान्तरे वर्त्तमानौ पूर्वस्य स्वरस्याङ्गं भवतः।

संयोगस्यादिभूतो वर्णः स्वरयोरन्तरे वर्त्तमानः पूर्वस्य स्वरस्य अङ्गं भवति परस्य वा। यथा—'आ त्वा रथम् (ऋ॰ ८।६८।१)' इति द्वौ तकारौ वकारश्च संयोगः। तत्र प्रथमस्तकारः क्रमजः, अतः पूर्वस्वरस्याङ्गम्, तस्य चोदात्तत्वादुदात्तवत् श्रूयते। द्वितीयः मूलसंयोगादिः पूर्वस्य उदात्तस्य स्वरस्याङ्गम् उत्तरस्य वानुदात्तस्वरस्याङ्गम् उदात्तानुदात्तवत् श्रूयते। वकारो द्वितीयस्य स्वरस्याङ्गं, तस्य चानुदात्तत्वादनुदात्तवत् श्रूयते।

परस्य च व्यञ्जनस्य यत्र क्रान्तिर्द्विरुक्तिः, तत्र द्वे व्यञ्जने पूर्व-

स्वरस्याङ्गम् उत्तरस्य वा। यथा—'आर्त्नी इमे' ( ऋ' ६।७५।८ ) अत्र रेफात् परभूतौ तकारौ पूर्व्वस्वरस्याङ्ग' उत्तरस्य वा।

मात्रा ह्रस्वस्तावदवग्रहान्तरं द्वे
दीर्घस्तिस्रः प्लुत उच्यते स्वरः।
अधः स्विदासी३द् परि स्विदासी३द्
अर्थे प्लुतिर्भौरिव विन्दती३ँ त्रिः॥१६॥

ह्रस्वस्वर एकमात्राकालो वेदितव्यः। अवग्रहः पृथक् करणम्। समासवर्त्तिनोः पदयोः पृथक्करणम् एकमात्राकालं भवतीत्यर्थः।

दीर्घस्वरो द्विमात्राकालो वेदितव्यः। प्लुतस्य स्वरस्य तिस्रो मात्रा भवन्ति।

प्लुतस्वरस्य तिस्रो मात्रा भवन्ति इति यदुक्तं तत् त्रिभिरुदाहरणै-र्दर्शयति। 'अधःस्विदासी३त्' ( ऋ' १०।१२९।५ ); 'उपरि स्विदासी३त्' (ऋ' १०।१२९।५) ; 'भौरिव विन्दती३ँ' (ऋ' १०।१४६।१)। एतेषु त्रिषु उदाहरणेषु अर्थे अर्थसमाप्तौ प्लुतिः आख्यातस्य अन्ते स्वरे प्लुतिरित्यर्थः।

स्वरभक्तिः पूर्व्वभागक्षराङ्गं
द्राघीयसी साई मात्रेतरे च।
अर्द्धी नान्या रक्तसंज्ञोऽनुनासिकः
संयोगस्तु व्यञ्जनसन्निपातः॥ १७॥

'ऋकारवर्णा स्वरभक्तिरुत्तरा' ( ६।१३ ) इति वक्ष्यमाणा स्वरभक्तिः पूर्वं रेफं लकारं वा भजते। रेफादुत्तरा रेफसदृशी भवति, लकारादुत्तरा लकारसदृशी भवति, स्वराङ्गञ्च भवति। रेफाद् वा

लकाराद् वा यस्माद् व्यञ्जनाद् उत्तरा भवति तत्सहिता सा पूर्वस्य स्वरवर्णस्य अङ्गं भवतीत्यर्थः।

तत्र या दीर्घतरा स्वरभक्तिः (६।१३) सा अर्द्धमात्राकाला वेदितव्या।

इतरे उक्तकालेभ्यः ह्रस्वदीर्घप्लुतेभ्यो येऽन्ये वर्णा व्यञ्जनादय इति यावत् तेऽपि च अर्द्धमात्राकाला भवन्ति इत्यर्थः।

अन्या द्राघीयस्याः स्वरभक्तेर्यान्या स्वरभक्तिः (६।१३) सा अर्द्धोना पादमात्रा भवतीत्यर्थः।

अनुनासिको वर्णो रक्त इत्युच्यते। यत्र वर्णस्यानुनासिकसंज्ञा विहिता तत्र अनेन रक्तसंज्ञा विधीयते।

व्यञ्जनानां व्यञ्जनयोर्वा मिलकः संयोगसंज्ञा भवति।

**कण्ठ्योऽकारः प्रथमपञ्चमौ च**

**द्वावूष्माणौ केचिदेता उरस्यौ।**

**ऋकारऌकारावथ षष्ठ ऊष्मा**

**जिह्वामूलीयाः प्रथमस्य वर्गः॥ १८॥**

इदानीं वर्णानां स्थानान्युच्यन्ते—अकारवर्णः कण्ठस्थानः प्रत्येतव्यः।

ऊष्मणां वर्णानां मध्ये प्रथमः हकार इति यावत् पञ्चमश्च विसर्जनीय इति यावत् एतौ द्वौ एव कण्ठस्थानौ वेदितव्यौ इत्यर्थः।

केचिदाचार्या एतौ हकारविसर्जनीयौ उरःस्थानाविच्छन्ति इति शेषः।

ऋकार ऌकारश्च षष्ठश्च ऊष्मा जिह्वामूलीयः प्रथमश्च वर्गः ककारादिवर्ग एते जिह्वामूलस्थाना वेदितव्याः।

तालव्यावेकारचकारवर्गा-
विकारैकारौ यकारः शकारः ।
मूर्द्धन्यौ षकारटकारवर्गौ
दन्तमूलीयस्तु तकारवर्गः ॥ १९ ॥

एकारश्च चकारवर्गश्च इकारश्च ऐकारश्च यकारश्च शकारश्च एते तालुस्थाना वेदितव्याः ।

षकारश्च टकारवर्गश्च मूर्द्धन्यौ वेदितव्यौ । तकारवर्गस्तु दन्तमूलस्थानो वेदितव्यः ।

सकाररेफलकाराश्च रेफं
वर्त्स्यमेके शेष ओष्ठ्योऽपवाद्य ।
नासिक्यान् नासिक्ययमानुस्वारान्
इति स्थानान्यत्र यमोपदेशः ॥ २० ॥

सकारः रेफः लकारश्च दन्तमूलस्थाना वेदितव्याः ।

एके आचार्या रेफं वर्त्स्यमिच्छन्ति । वर्त्मे भवो वर्त्स्यः । वर्त्सशब्देन दन्तमूलादुपरिष्टात् उच्छूनः प्रदेश उच्यते ।

नासिक्यान् नासिकास्थानान् वर्णान् अपवाद्य परित्यज्य शेषो वर्णराशिः उ ऊ ओ औ प फ ब भ म उपध्मानीयः इत्येते इति यावत् ओष्ठस्थाना वेदितव्याः ।

के ते नासिक्या इत्यपेक्षायामाह—'नासिक्ययमानुस्वारान्' इति । केवलनासिकयोच्चार्य्यमाणो वर्णो नासिक्यः । कं खं गं घं इत्यादयो यमाः । अं इत्यनुस्वारः ।

इति स्थानानि—कण्ठ्योऽकार (१।१८) इत्यत आरभ्य परिभाषितानि तानि स्थानानि वेदितव्यानि इत्यर्थः ।

कण्ठ्योऽकार इत्यत आरभ्य यानि स्थानान्युक्तानि अत्र एषु स्थानेषु यमानां स्थानोपदेशः कर्त्तव्यः। नासिक्यास्तावत् सर्व्वे एव यमा उक्ताः, द्वितीयं तु प्रकृत्याश्रयं यत् स्थानं तदर्थमिदमुक्तम्। तथाचोक्तं —'यमः प्रकृत्यैव सदृक्' (६।८) इति।

जिह्वामूलं तालु चाचार्य्य आह

स्थानं डकारस्य तु वेदमित्रः।

द्वयोश्चास्य स्वरयोर्मध्यमेत्य

सम्पद्यते स डकारो ळकारः॥ २१॥

डकारस्य पूर्वोक्तस्थानापरितोषात् स्थानान्तरं प्रतिपादयितुमाह जिह्वामूलेति। आचार्य्यो वेदमित्रो जिह्वामूलं तालु च डकारस्य स्थानमाह।

स एवोक्तस्थानो डकारोऽस्य आचार्य्यस्य मतेन द्वयोः स्वरयोर्मध्यम् प्राप्य ळकारभावं याति।

ळ्हकारतामेति स एव चास्य

ढकारः सन्नूष्मणा सम्प्रयुक्तः।

ईळा साळ्हा चात्र निदर्शनानि

वीड्‌ढ्‌ इत्येतदवग्रहेण॥ २२॥

किञ्च स एव डकारो ऊष्मणा हकारेण सम्प्रयुक्तः सन् अस्यैवाचार्य्यस्य मतेन ढकारो भवति, तथा सति स एव ढकारो द्वयोः स्वरयोर्मध्यं गतः ळ्हकारतां याति। अत्र ईळा, साळ्हा इतीति यथासंख्यं ळकार-

ऌ ऌ्हकारयोरुदाहरणे। वोड्ह्ङ्ग इतिएतदुदाहरणमवग्रहेण भवति अव-ग्रहकाले एव भवतीत्यर्थः। यथा—वीळु ऽअङ्ग इति पदपाठे, वोड्ह्ङ्ग इति तु संहितायाम्। उक्तञ्च—'अज्मध्यस्थडकारस्य ळकारं बह्व चा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्॥' इति।

**न्यायैर्मिश्रानपवादान् प्रतीयात्**
**सर्व्वंशास्त्रार्थं प्रतिकण्ठमुक्तम्।**
**स्थानप्रश्लेषोपदेशे स्वराणां**
**ह्रस्वादेशे ह्रस्वदीर्घौ सवर्णौ॥ २३॥**

न्याया उत्सर्गाः, महाविषया विधयः; अपवादाः अल्पविषया विधयः; तान् उत्सर्गेण मिश्रान् एकीकृतान् जानीयात्। अपवाद-विषयं मुक्त्वा उत्सर्गाः प्रवर्त्तन्ते इत्यर्थः।

सर्वशास्त्रार्थं शास्त्रसम्पूर्त्तये प्रतिकण्ठं निपातनम् उक्तम् इति जानीयात्। उत्सर्गविधिभिः साधयितुमशक्या अपि प्रयोगविशेषा निपात्यन्ते शास्त्रसम्पूर्त्तये।

'कण्ठ्योऽकारः' (१।१८) इत्यादिः स्थानोपदेशः उच्चारण-स्थानोपदेशः। 'समानाक्षरे सस्थाने' (२।६) इत्यादिः प्रश्लेषो-पदेशः। एतस्मिन्नुभयरूपे स्वराणामुपदेशे सति यत्र ह्रस्वः स्वरः उपदिश्यते तत्र तस्य ह्रस्वस्वरस्य सवर्णौ ह्रस्वदीर्घौ उभौ अपि ग्राह्यौ। तथा च 'कण्ठ्योऽकारः' इत्युक्ते अकाराकारौ उभावपि कण्ठ्यौ इति भवति अर्थः। 'इकारोदय एकारमकारः सोदयः' (२।६) इत्युक्ते ह्रस्व इकारः दीर्घ ईकारश्च इत्युभावपि गृह्येते। स्थान-प्रश्लेषोपदेशे इति किम्—'ह्रस्वपूर्वस्तु सोऽकार' (२।१०) इत्यत्र ह्रस्वमात्रमेव गृह्यते न तु दीर्घमपीत्यर्थः।

असावमुमिति तद्भावमुक्तं
यथान्तरं पादवच्चैव प्रैषान् ।
प्राक् चानार्षादितिकरणात् पदान्तां-
स्तद्युक्तानां तेन येऽसंहितानाम् ॥ २४ ॥

'यत्रासौ वर्णः अमुम्' इत्येवं वक्ष्यति तत्र तद्भावम् उक्तं जानीयात्। तदित्यनेन द्वितीयानिर्दिष्टं परामृश्यते। तेन रूपेण भवनं तद्भावः। स च प्रथमानिर्दिष्टस्य भवति। तं च तद्भावं यथान्तरं जानीयात् यो यस्यान्तरः सन्निकृष्टः स्थानकरणानुप्रदानैः स तस्य भवति।

'होता यक्षदग्निं' 'समिधा सुषमिधा' इत्यादयः प्रैषाः। तान् पादतुल्यलक्षणान् जानीयात्। ऋक्षु यत् लक्षणं तत् प्रैषेष्वपि भवतीत्यर्थः। यथा—'नकार आकारोपध' (४२६) इत्यनेन नकारलोपः पादवृत्तिषु विहितः स च प्रैषेष्वपि भवति। यथा—हरिवाँ इन्द्रो धाना।

अनार्षात् अवैदिकात् इतिकरणात् प्राक् पूर्वेण पदान्तान् जानीयात्। तद्युक्तानां तेनानार्षेणेतिकरणेन युक्तानां सम्बद्धानाम्। यत्र इतिकरणो विद्यते न तु पदान्तेन संसृष्टः, तत्रायं विधिरुच्यते। तेन अनार्षेण इतिकरणेन असंहितानाम् असम्बद्धानां पदानां ये पदान्तास्ते एव पदान्ता वेदितव्याः। 'इन्द्राग्नी इति। अपात्।' इति पदपाठात् 'इन्द्राग्नी अपात्' (ऋ० ६।५९।६) इत्येवं संहिता स्यात् 'इन्द्राग्नी इत्यपात्' इत्येवं संहिता माभूदित्येवमर्थोऽयमारम्भः।

सामवशा इति चैवापवादान्
कुर्वन्ति ये सम्पदं पादवृत्तयोः ।

अप्रत्याम्नाये पदवच्च पद्यान्
ऋते नतोपाचरितक्रमस्वरान् ॥ २५ ॥

सामवशान् सन्धीन् उपरिष्टाद् वक्ष्यति—'यथादिष्टः सामवशः स सन्धिः' (७।१)। तान् सामवशान् सन्धीन् अनुलोमानामन्वक्षरसन्धीनाम् अपवादभूतान् जानीयात्। अन्वर्थसंज्ञा चेयम्—समस्य भावः सामम्। छन्दसां समत्वं वशः प्रयोजनं येषाम् अन्वक्षरसन्धीनां ते सामवशाः सन्धयः छन्दसां सम्पत्करा इत्यर्थः। अतएवाह—'कुर्वन्ति ये सम्पदं पादवृत्तयोः' (७।१) पादवृत्तयोः सम्पदं कुर्वन्ति नार्थान्तरं कुर्वन्ति।

'पदान्तादिष्वेव विकारशास्त्रम्' (२।२) इति वक्ष्यति न तु पदावयवेष्वपि प्राप्नोति। अतस्तत्प्रापणार्थमाह। प्रत्याम्नायः पुनर्वचनम्। असति पुनर्वचने पदवत् पद्यान् पदावयवान् प्रतीयात्। त्वाजतासः इत्यतः त्वोतासः। 'उकारोदय ओकारम्' (२।७) इति पदसन्धिषु वक्ष्यति, तत् पद्येष्वपि भवति। अप्रत्यम्नाये इति किम्—वसोरिन्द्रं वसुपतिम् (ऋ० १।८।८) 'षष्ठं चाष्टाक्षरेऽक्षरम्' (८।२२) इति प्लुतिः प्राप्ता, विग्रहे (८।१) इति पुनर्वचनात् न भवति।

नतम् उपाचरितं क्रमं स्वरं च ऋते विहाय अन्यत्र पदवत् पद्यान् जानीयात्। एतेषु तु यत् पदस्य कार्य्यं विधीयते तत् पद्यस्य न भवति।

अष्टावाद्यानवसानेऽप्रगृह्यान्
आचार्य्या आहुरनुनासिकान् स्वरान्।
तच्छिमावे शाकला दर्शयन्त्या-
चार्य्यशास्त्रापरिलोपहेतवः ॥ २६ ॥

अष्टौ आद्यान् अकारादीन् अप्रगृह्यान् स्वरान् आचार्या अवसाने अनुनासिकान् ब्रुवन्ति।

तदेतत् आनुनासिक्यं त्रिमात्रे स्वरे शाकल्यऋषिमतानुसारिणो दर्शयन्ति नान्यत्र इत्यर्थः। अत्र हेतुमाह—आचार्यशास्त्रमनेन एकेन प्लुतेनानुनासिकेन सता अपरिलुप्तं यथा स्यात् इति। यथा—न त्वा भीरिव विन्दतीँ३।

**ऋकारादयो दश नामिनः स्वराः**
**पूर्वो नन्ता नतिषु नम्यमुत्तरम्।**
**सहोपधोऽरिफित एकवर्णवद्**
**विसर्जनीयः स्वरघोषवत्परः॥ २७॥**

ऋकारमादौ कृत्वा दश स्वरा नामिसंज्ञा वेदितव्याः। ऋ ॠ इ ई उ ऊ ए ओ ऐ औ इति। नमयन्ति दन्त्यं सन्तं मूर्द्धन्यं कुर्वन्तीति नामिनः।

नतिषु वर्त्तमानानां वर्णानां पूर्वो नन्ता नमयिता वर्णो भवति, नम्यं व्यञ्जनमुत्तरं भवति।

अरिफितोऽरेफो विसर्जनीयः उपधासहित एकवर्णवत् अवगन्तव्यः स्वरपरो घोषवत्परश्च सन्। यथा—स्वरपरः—य इन्द्रः सोमपातमः (ऋ' ८।१२।१) इत्यत्र 'ह्रस्वपूर्वस्तु सोऽकारम्' (२।१०) इति सोपधस्य अकारः। घोषवत्परः—नमो भरन्त एमसि (ऋ' १।१।७) इत्यत्र 'ओकारं ह्रस्वपूर्वः' (४।८) इति सोपधस्य ओकारः। अरिफित इति किम्—'पुनर्द्यौर्दिवो पुनरन्तरिक्षम् (ऋ' १०।५९।७)। स्वरघोषवत्पर इति किम्—'य स्तिग्मशृङ्गो वृषभो न भीमः' (ऋ' ७।१९।१)।

ओकार आमन्त्रितजः प्रगृह्यः

पदं चान्योऽपूर्व्वपदान्तगश्च ।

षष्ठादयश्च द्विवचोऽन्तभाज-

स्त्रयो दीर्घाः साप्तमिकौ च पूर्व्वौ ॥ २८ ॥

ओकार आमन्त्रिताज्जातः प्रगृह्यसंज्ञो भवति ।

आमन्त्रितसंज्ञितादोकाराद् अन्यद् यद् ओकारस्वरूपं पदं वर्त्तते सोऽपि प्रगृह्यसंज्ञो भवति । यथा—"ओ चि वर्त्तते" ( ऋ' १०।११७।५ ) ।

समासगतपूर्वपदान्तस्योकारस्य प्रगृह्यसंज्ञा न भवति । अन्यत्र सर्व्वत्र भवति ।

षष्ठादयश्च षष्ठः स्वर आदिर्येषां ते ई ऊ ए इत्येते त्रयो दीर्घाः स्वरा द्विवचनाभिधायिनः प्रगृह्यसंज्ञा भवन्ति ।

एषामेव त्रयाणां वर्णानां मध्ये यौ पूर्व्वौ दीर्घौ स्वरौ तौ ई ऊ इत्येतौ इति यावत् प्रगृह्यसंज्ञौ भवतः सप्तम्यर्थाभिधायिनौ च यदा भवतः ।

अस्मे युष्मे त्वे अमी च प्रगृह्या

उपोत्तमं नानुदात्तं न पद्यम् ।

उकारश्चेतिकरणेन युक्तो

रक्तोऽपृक्तो द्राघितः शाकलेन ॥ २९ ॥

अस्मे युष्मे त्वे अमी इत्येतेषु च ये ईकारैकारास्ते प्रगृह्यसंज्ञाः स्युः ।

अस्मे युष्मे त्वे अमी इत्येतेषां पदानामुपोत्तमं यदुत्तमस्य पदस्य समीपे पदं तत् त्वे इति यावत् अनुदात्तं वा पद्यं पदावयवं वा सत् प्रगृह्यसंज्ञं न भवति ।

अपृक्तश्च उकारः प्रगृह्यसंज्ञो भवति। स च इतिकरणेन युक्तो रक्तोऽनुनासिक्त इति यावद् दीर्घश्च भवति शाकलेन मतेन।

ऊष्मा रेफी पञ्चमो नामिपूर्व्वो

महोऽपोवर्जमितरो यथोक्तम्।

अन्तोदात्तमन्तरन्ना विपर्य्यये

स्पर्शे चोषः प्रत्यये पूर्व्वपद्यः॥ ३०॥

पञ्चम ऊष्मा विसर्जनीय इति यावत् नामिपूर्व्वः सन् रेफिसंज्ञो भवति।

महः अपः इतीते पदे वर्जयित्वा इतरः अनामिपूर्वो यः पञ्चम ऊष्मा विसर्जनीयः स यथोक्तं रेफिसंज्ञो भवति।

अन्तरित्येतत् पदम् अन्तोदात्तं सद् रेफिसंज्ञं भवति।

अन्नारित्येतत् पदम् अधस्तनस्य पदस्य स्वरविपर्य्यये सति रेफिसंज्ञं भवति। अन्तोदात्तमधस्तनपदम्। ततस्वरविपर्य्यये अनुदात्तम् आद्युदात्तं वा सदित्यर्थः।

उषरित्ययं पूर्वपद्यः पूर्वपदावयवः सन् स्पर्शे प्रत्यये परभूते इति यावत् रेफिसंज्ञो भवति।

प्रातर्देवं भावधराद्युदात्तं

करनुदात्तमविभक्तदादः।

स्तः प्रागायमेतशे कर्दिवे

करपस्करत्सारविपूर्वमस्तः॥ ३१॥

प्रातरित्येतत् पदं रिफितसंज्ञं भवति।

भारित्येतत् पदं रिफितसंज्ञं भवति देवमिति पदं पूर्वं चेत्।

वधरित्येतत् पदमाद्युदात्तं चेत् रिफितसंज्ञं भवति। करित्येतत् पदं रिफितसंज्ञं भवति अनुदात्तं चेत्। अबिभरित्येतत् पदं रिफितसंज्ञं भवति।

आदरित्येतत् पदं तदेत्येतत् पूर्वपदं चेत् रिफितसंज्ञं भवति। स्तरित्येतत् पदं प्रागाथसंज्ञं चेत् रिफितसंज्ञं भवति। करित्येतत् पदं रिदितसंज्ञं भवति एतशे इति पूर्वं चेत्। करित्येतत् पदं रिफितसंज्ञं भवति दिवे इति पूर्वं चेत्। करित्येतत् पदं रिफितसंज्ञं भवति अप इत्येतत् पदं पूर्वं चेत्।

अत्सारित्येतत् पदं रिफितसंज्ञं भवति।

अस्तरित्येतत् पदं रिफितसंज्ञं भवति, विपूर्वं चेन्न भवति।

स्वः स्वरितं न समासाङ्गमुत्तरं
स्वरादेशोऽपूर्व्वपदेष्ववर्मह:।
अनर्द्धर्चान्ते स्वरघोषवत् परम्
ऊधर्न रेफेऽकृषासोऽहणन्महो॥ ३२॥

स्वरित्येतत् पदं रिफितसंज्ञं भवति स्वरितं चेत्। स्वरित्येतत् पदं समासस्योत्तराङ्गं सत् रिफितसंज्ञं न भवति।

योऽयं स्वरादेश: अन्तोदात्तम्(ऋ० १।३०), वधराद्युदात्तं (१।३१), स्वः स्वरितम् ( १।३२ ) इत्यादेश: सः अपूर्वपदेषु असमासपूर्वपदेषु इति यावत् भवति। यदि पूर्वपदानि भवन्ति तदान्यस्वरानुदात्तादियुक्तान्यपि रिफितसंज्ञानि भवन्ति।

अवरित्येतत् पदं रिफितसंज्ञं भवति मह इत्येतस्मात् पदात् पूर्वं चेत्।

ऊधरित्येतत् पदं स्वरघोषवत्परं सत् रिफितसंज्ञं भवति, अर्द्धर्चान्ते चेन्न भवति।

रेफादौ पदे परभूते अरुषाम: अतृणत् महो इतीरतेषु परभूतेषु च ऊधःशब्दो रिफितसंज्ञो न भवति ।

वरवरावरिति चैकपादे
व्यपपूर्व्वाण्यसमासाङ्गयोगे ।
पथ्या मघोनो दिवि चत्तसा मदे
पूर्व्वोऽर्चिषातीतृषामोत्तरेषु न ॥ ३३ ॥

वः अवः आवः इत्येतानि पदानि रिफितसंज्ञानि भवन्ति । कथम्भूतानीत्यत आह—एकस्मिन् पादे यदि वि अप इतीरवंपूर्वाणि भवन्ति, यदि च उभयोरपि समासाङ्गयोगो न भवति । वः अवः आवः इतीतानि पदानि समासाङ्गभूतानि न भवन्ति, वि अप इतीरते च पदे यदि समासाङ्गभूते न भवत इत्यर्थः ।

पथ्या, मघोनो, दिवि, चत्तसा, मदे, पूर्वः, अर्चिषा, अतीतृषाम—इतीरतेषु पदेषु परभूतेषु वः, अवः, आवः—इतीरतानि रिफितसंज्ञानि न भवन्ति ।

होतः सनितः पोतर्नेष्टः
सोतः सवितर्नेतस्त्वष्टः ।
मातर्जनितर्भ्रातस्त्रातः
स्थातर्जरितर्धातर्धर्त्तः ॥ ३४ ॥

होतः, सनितः, पोतः, नेष्टः, सोतः, सवितः, नेतः, त्वष्टः, मातः, जनितः, भ्रातः, त्रातः, स्थातः, जरितः, धातः, धर्त्तः—इतीरतानि पदानि रिफितसंज्ञानि भवन्ति ।

जामातर्दुहितर्नप्तः प्रशास्तरवितः पितः ।
दोषावस्तरवस्पर्तः प्रयन्तश्चेङ्ग्यमुत्तमम् ॥ ३५ ॥

जामातः-प्रभृति प्रयन्तः-पर्य्यन्तानि एतानि पदानि रिफितसंज्ञानि भवन्ति। उत्तमं पदं प्रयन्तः इति यावत् यदा इङ्ग्यं सावग्रहं भवति तदैव रिफितसंज्ञं भवति।

दीधरभारवरीवरदर्दर्दरदर्धरजागरजीगः ।
वारपुनः पुनरस्परकः स्पः सस्वरहः सनुतः सबरस्वाः॥३६

दीधः, अभाः, अवरीवः, अदर्दः, दर्दः, अदर्धः, अजागः, अजीगः, वाः, अपुनः, पुनः, अस्पः, अकः, स्पः, सस्वः, अहः, सनुतः, सबः, अस्वाः—इत्येतानि पदानि रिफितसंज्ञानि भवन्ति।

## द्वितीयं पटलम् ।

संहिता पदप्रकृतिः पदान्तान्
पदादिभिः सन्दधदेति यत् सा ;
कालाव्यवायेन स्वरान्तरं तु
विवृत्तिः सा वा स्वरभक्तिकाला ॥ १ ॥

पदानि प्रकृतिभूतानि यस्याः संहितायाः सा पदप्रकृतिः संहिता। पदान्तान् पदादिभिर्यदेकीकुर्वन्नेति ग्रन्थमनुसरति सा संहितोच्यते। कालाव्यवायेन तु पदानाम्।

अस्यामेव संहितायां यत् स्वरयोरन्तरं तत् विवृत्तिसंज्ञं स्यात्।
सा विवृत्तिः स्वरभक्तिकाला वा स्यात् अधिककाला वा।

पदान्तादिष्वेव विकारशास्त्रं
पदे दृष्टेषु वचनात् प्रतीयात्।
पदं पदान्तादिवदेकवर्णं
प्रश्लिष्टमप्यानुपूर्व्येण सन्धीन्॥ २॥

यत् किञ्चिद् विकारशास्त्रं तत् पदान्तेषु पदादिषु च वेदितव्यम्। पदे दृष्टेषु पदावस्थायामुपलब्धेषु पदान्तेषु वचनात् प्रतीयात् वचनमन्तरेण विकारो न भवतीत्यर्थः।

एको वर्णो अस्य इत्येकवर्णम्। एकवर्णं यत् पदं तत् पदान्तवत् पदादिवच्च कार्य्यं लभते यद्यपि प्रश्लिष्टं पदान्तरेण संयुक्तं भवति। यथा—'इन्द्र आ इहि' इत्यत्र इन्द्रशब्दस्य आकारेण सह सन्धौ कृते इन्द्रा इति भवति, ततश्च आ इत्यस्य प्रश्लिष्टत्वेऽपि आकारं पदान्तवद् अङ्गीकृत्य इहि इत्यनेन सन्धौ इन्द्रेहि इति भवति।

पदानुपूर्व्येण पदानामानुपूर्व्येण क्रमानुसारेण प्रश्लिष्टान् सन्धीन् कुर्य्यादित्यर्थः। तथा च 'इन्द्र। आ। इहि' इत्यत्र आदौ इन्द्र आ इत्येतयोर्भवेत् सन्धिर्न तु आ इहि इत्येतयोः।

एष स्य स च स्वराश्च पूर्वे
भवन्ति व्यञ्जनमुत्तरं यदेभ्यः।
तेऽन्वक्षरसन्धयोऽनुलोमाः
प्रतिलोमास्तु विपर्य्यये त एव॥ ३॥

चतुःप्रकाराः सन्धयो भवन्ति। तद् यथा—द्वयोः स्वरयोः, द्वयोर्व्यञ्जनयोः, व्यञ्जनस्वरयोः, स्वरव्यञ्जनयोरिति। तत्रादौ स्वरव्यञ्जनसन्धिमाह। एषः, स्यः, सः—एतानि च पदानि यदा पूर्वाणि भवन्ति, स्वराश्च स्वरान्तानि च पदानि यदा पूर्वाणि भवन्ति, व्यञ्जनं च यदा उत्तरमेतेभ्यो भवति, तदा ते अनुलोमा अन्वक्षरसन्धय इत्येवंसंज्ञा वेदितव्याः।

त एव अन्वक्षरसन्धयः प्रतिलोमपदा भवन्ति यदा स्वरव्यञ्जनविपर्य्ययो भवति। अनुलोमसन्धिषु स्वराः पूर्व्वं व्यञ्जनानुत्तराणि; इह तु अन्वक्षरप्रतिलोमसन्धिषु व्यञ्जनानि पूर्वाणि, स्वरा उत्तरे इत्यर्थः।

तत्र प्रथमास्तृतीयभावं
प्रतिलोमेषु नियन्त्यथेतरेषु।
ऊष्मा परिलुप्यते त्रयाणां
स्वरवर्जं न तु यत्र तानि पद्याः॥ ४॥

तत्र तेषु प्रतिलोमेषु अन्वक्षरसन्धिषु प्रथमाः स्पर्शाः पदान्तीयास्तृतीयभावं गच्छन्ति। यथा—'हव्यवाट् अग्निः' इत्यतः 'हव्यवाडग्निः' ( ऋ॰ ५।४।२ )।

अथेतरेषु अनुलोमेषु अन्वक्षरसन्धिषु ऊष्मा विसर्जनीयो लुप्यते त्रयाणां पदानां—'एषः, स्यः, सः' इत्येतेषामिति यावत्। स च लोपः स्वरवर्जम् स्वरं वर्जयित्वा। 'सहोपधोऽरिफितः' ( २।९ ) इत्यादिना विसर्जनीयलोपे सति स्वरस्य लोपः प्राप्नोति, अतः स्वरवर्जमित्युच्यते। यथा—'एषः देवः' इत्यतः एष देवः ( ऋ॰ ८।३।१ )।

'एषः, स्यः, सः',—एतेषां मध्ये अन्यतमद् यत्र पद्यं पदावयवं भवति तत्र विसर्जनीयस्य लोपो न भवति। यथा—'पशुसः न वाजान्' इत्यतः पशुषो न वाजान् ( ऋ॰ ५।४१।१ )

पुरएता तितउना प्रउगं नमउक्तिभिः ।
अन्तःपदं विवृत्तयोऽतोऽन्याः पदसन्धिषु ॥ ५ ॥

पुरएता ( ऋ॰ ६।४७।७ ),* तितउना ( ऋ॰ १०।७१।२ ), प्रउगं ( ऋ॰ १०।१३०।३ ), नमउक्तिभिः ( ऋ॰ ८।४।६ )—इत्येताः अन्तःपदं पदमध्ये विवृत्तयः। पदमध्ये या विवृत्तयस्ताः प्रतिपादयति अवग्रहसन्देहव्युदासार्थम् ।

अतो विवृत्तिचतुष्टयाद् या अन्या विवृत्तयस्ताः पदसन्धिषु वेदितव्याः न तु एकपदमध्ये इत्यर्थः। यथा—कक्षीवन्तं य औशिजः ( ऋ॰ १।१८।१ )।

समानाक्षरे सस्थाने दीर्घमेकमुभे स्वरम् ।
इकारोदय एकारम् अकारः सोदयस्तथा ॥ ६ ॥

"अष्टौ समानाक्षराण्यादित (१।११)" इत्युक्तम्। समानाक्षरे समानस्थाने च उभे दीर्घमेकं स्वरमापद्येते ।

इकारपरः इकारः परभूतो यस्मात्तथाभूतः अकार एकारमापद्यते सोदयः सह परेण इकारेण ।

उकारोदय ओकारं परेष्वैकारमोजयोः ।
औकारं युग्मयोरेते प्रश्लिष्टा नाम सन्धयः ॥ ७ ॥

यथा इकारोदयः अकारः सोदय एकारवर्णमापद्यते एवमवर्णं उकारोदय ओकारमापद्यते।

परेषु सन्ध्यक्षरेषु मध्ये ओजयोर्विषमयोः प्रथमतृतीययोः 'ए ऐ' इत्येतयोरिति यावत् परतः परभूतयोः सतोः सोदयः अकार ऐकारमापद्यते ।

---

* ऋग्वेदे अन्यत्रोपलभ्यमाने 'पुर एता' इत्यत्र अवग्रहो वर्त्तते ।

युग्मयोर्द्वितीयचतुर्थयोः ओकारौकारयोः परभूतयोः सतोः सोदयः अकारः औकारमापद्यते ।

एते सन्धयः "समानाक्षरे सस्थाने" इत्यत आरभ्य प्रश्लिष्टसंज्ञाः सन्धयो वेदितव्याः ।

**समानाक्षरमन्तःस्थां स्वामकण्ठ्यं स्वरोदयम् ।**

**न समानाक्षरे स्वे स्वे ते क्षैप्राः प्राकृतोदयाः ॥८॥**

अकण्ठ्यं कण्ठ्यवर्णरहितम्, अकाराकाराभ्यां विनेति यावत् समानाक्षरं स्वरपरम् स्वरोदयं स्वां स्थानेन इति शेषः अन्तःस्थामापद्यते । यथा—'अभि आर्यम्' इत्यतः अभ्यार्यम् (ऋ० ८।८७।५१)।

न भवति क्षैप्रः स्वे स्वे समानाक्षरे परभूते इत्यर्थः । यथा—दिवि इव इत्यतः दिवीव न तु 'दिव्यिव' ।

ते क्षैप्राः सन्धयः प्राकृतोदयाः प्राकृतस्वरपराः ।

**विसर्जनीयोऽरिफितो दीर्घपूर्व्वः स्वरोदयः ।**

**आकारमुत्तमौ च द्वौ स्वरौ ताः पदवृत्तयः ॥ ९ ॥**

अरिफितो दीर्घपूर्व्वः सदीर्घोपधः स्वरोदयः स्वरपरः विसर्जनीयः आकारमापद्यते । यथा—याः ओषधीः इत्यत या ओषधीः (ऋ० १०।९७।१८)।

उत्तमौ च द्वौ स्वरौ ऐ औ इत्येतौ इति यावत् आकारमापद्येते स्वरोदयौ सन्तौ । उभौ उम इत्यतः उभा उ (ऋ० १०।१०६।१)।

ता एतास्तिस्रः पदवृत्तय उच्यन्ते ।

**ह्रस्वपूर्व्वस्तु सोऽकारं पूर्व्वौ चोपोत्तमात् स्वरौ ।**

**त उद्ग्राहा दीर्घपरा उद्ग्राहपदवृत्तयः ॥ १० ॥**

ह्रस्वस्वरपूर्वस्तु सः अरिफितो विसर्जनीयः सोपधः स्वरोदयः अकारमापद्यते। यथा—'यः इन्द्रः' इत्यतः 'य इन्द्रः' ( ऋ ८।१२।१ )।

उपोत्तमात् उत्तमात् स्वरात् पूर्व्वौ स्वरौ एकारौकारौ इति यावत् स्वरपरौ अकारमापद्येते। यथा—'अग्ने इन्द्रः' इत्यतः 'अग्न इन्द्रः' ( ऋ ५।४६।२ )।

ते उद्ग्राहसंज्ञाः सन्धयो वेदितव्याः। तथा ते एव उद्ग्राहाः दीर्घपराः सन्तः उद्ग्राहपदवृत्तयो भवन्ति। यथा—'कः ईषते' इत्यतः 'क ईषते' ( ऋ १।८४।१७ )।

**ओष्ठ्ययोन्योर्भुग्नमनोष्ठ्ये वकारोऽन्तरागमः।**

**ऋकार उदये कण्ठ्यावकारं तदुद्ग्राहवत् ॥११॥**

अनोष्ठ्ये स्वरे परभूते ओष्ठ्यौ ओकारौकारौ योनी कारणं ययोस्तौ ओष्ठ्ययोनी ओकारौकारस्थानजातौ इत्यर्थः अकाराकारौ तयो. वकारः अन्तरागमो भवति। यतः ओकारौकारयोः स्थानसम्भूतौ अतः कारणात् अकाराकारौ ओष्ठ्ययोनी, तेन वकारागमः। भुग्नं नाम चैतत् सन्धानं भवति। यथा—'ऋतेन मित्रावरुणौ ऋतावृधौ ऋतस्पृशा' इत्यतः ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ( ऋ १।२।८ ) अनोष्ठ्ये इति किम्—वायो उक्थेभिः इत्यतः वाय उक्थेभिः ( ऋ १।२।२ )।

ऋकारे उदये परभूते सति कण्ठ्यौ अकाराकारौ अकारमापद्येते। तत् सन्धानम् उद्ग्राहवत्संज्ञं भवति। यथा—प्र ऋभुभ्यः इत्यतः प्रऋभुभ्यः ( ऋ ४।३३।१ )।

**उद्ग्राहाणां पूर्व्वरूपाण्यकारे**

**प्रकृत्या द्वे ओ भवत्येकमाद्यम्।**

**प्राच्यपञ्चालपदवृत्तयस्ताः**

**पञ्चालानामोष्ठ्यपूर्व्वा भवन्ति ॥ १२ ॥**

उद्ग्राहाणां सन्धीनां यानि पूर्वरूपाणि ये पूर्वरूपा अवयवाः ह्रस्वपूर्वो विसर्जनीय एकार ओकारश्च इति यावत् तेषु मध्ये अकारे परतः द्वे एकारौकारौ इति यावत् प्रकृत्या भवतः आद्यमेकं ह्रस्वपूर्वो विसर्जनीय इति यावत् ओकारो भवति। ताश्च प्राच्यपदवृत्तयः पञ्चालपदवृत्तयश्च उच्यन्ते। ओष्ठ्यपूर्वा वृत्तिः पञ्चालपदवृत्तिरित्युच्यते। इतरास्तु प्राच्यपदवृत्तयः। पाञ्चालपदवृत्ति र्यथा—'यः अस्मै' इत्यतः यो अस्मै (ऋ॰ ८।३१।२), प्राच्यपदवृत्ति र्यथा—'ते अग्रेपाः' (ऋ॰ ४।३४।१०)।

**अथाभिनिहितः सन्धिरेतैः प्राकृतवैकृतैः।**

**एकीभवति पादादिरकारस्तेऽत्र सन्धिजाः ॥१३॥**

अथ शब्दो महाधिकारद्योतनार्थः। अभिनिहितसंज्ञकः सन्धि-र्वक्ष्यते इति वाक्यशेषः। पादादिरकारः एतैः प्राकृतवैकृतैरधस्तनैः एकारौकाराभ्यां प्राकृताभ्यां ह्रस्वपूर्वेण च ओकारभूतेन वैकृतेन इति यावत् एकीभवति। स एष सन्धिरभिनिहितसंज्ञ उच्यते इत्यर्थः। ते एकारौकारा इति यावत् चात्र सन्धौ दृश्यन्ते एकीभावादवशिष्यन्ते इत्यर्थः। यथा—रथेभ्योऽग्ने (ऋ॰ १।८४।११), दाशुषेऽग्ने (ऋ॰ १।८४।१४)। पादादिरिति किम्—आरे अस्मे (ऋ॰ १।७४।१) अत्र पादादित्वाभावात् नैकीभावः।

**अन्तःपादमकाराच्चेत् संहितायां लघोर्लघु।**

**यकाराद्यक्षरं परं वकाराद्यपि वा भवेत् ॥ १४ ॥**

अन्तःपादं पादस्य मध्ये लघोरकारात् परमक्षरं यदि लघु

भवेत् यकारादि वकारादि वा भवेत् तदा संहितायां सः अकारः अभिनिधीयते प्राकृतवैकृतैरकोभवतीत्यर्थः। यथा—'मनसा सोऽयम्' ( ऋ॑ १०।५३।१ ), पृच्छन्तोऽवरासः (ऋ॑ ६ २१।६)। लघोरकारादिति किम्—सोचन्तो अव्रतम् ( ऋ॑ ६।१४।३ ) अत्र संयोगपूर्वस्य अकारस्य गुरुत्वात् अप्राप्तिः। लघ्विति किम्—'मह्नो अवद्यात् ( ऋ॑ ४।४।१५ ) अत्र वकारात् परमक्षरं संयोगपूर्वत्वात् गुरु इत्यप्राप्तिः। यकाराद्यक्षरं परमित्यादि किम्—देवासो अमृतासः ( ऋ॑ १।१२३।१ )

**अन्याद्यपि तथायुक्तम् आवोन्तोपहितात् सतः।**
**अयेऽयोऽवेऽव इत्यन्तैरकारः सर्व्वथा भवन्॥ १५॥**

यकारादि वकारादि वा यदक्षरमुक्तं तदुच्यते। यद्यप्यन्यव्यञ्जनादि तदक्षरं तथा तेनैव प्रकारेण युक्तं भवति लघोरकारात् व्यञ्जनादिलघुस्वरो भवतीत्यर्थः अथ च तत् व्यञ्जनाद्यक्षरं आवोन्तोपहितात् आव एवमन्तो यस्य पदस्य तत् आवोऽन्तं तेन उपहितः तस्मात् सतः अकारात् परं भवतीति शेषः तदा सोऽकारः अभिनिधीयते इत्यर्थः। यथा—गावोऽभितः (ऋ॑ ५।३०।१०)। तथायुक्तमिति किम्—गावो अग्मन् ( ऋ॑ ६।२८।१ )। अत्र संयोगपूर्वत्वात् अकारस्य गुरुत्वे अप्राप्तिः। आवोऽन्तोपहितात् इति किम्—देवासो अमृतासः ( ऋ॑ १।१२३।१ )

अये, अयः, अवे, अवः—एतदन्तैः पदैरुपहितः अकारः सर्वथा सर्वप्रकारोऽपि भवन् लघुर्गुरुर्वा भवन्निति यावत् अभिनिधीयते। यथा—अजीतयेऽहतये ( ऋ॑ ८।८६।४ ), पिदवेऽश्विनाश्वम् ( ऋ॑ ८।३८।१० )।

**व इत्येतेन चा न प्र क्व चित्र सवितेव कः।**
**पदैरुपहितेनैतैः सर्वैरेवोदयाः परे ॥ १६ ॥**

आ, न, प्र, क्व, चित्र, सविता, एव, कः—एतैः पदैरुपहितेन व इति पदेनोपहिता योऽकारः सोऽभिनिधीयते। यथा—आ वोऽह्म् ( ऋ' १०।१६६।४ ), न वोऽश्वाः ( ऋ' ५।५४।१० ), प्र वोऽच्छा ( ऋ' १०।३२।५ ) इत्यादि।

सर्वैरेव प्राकृतवैकृतैः एकारौकारैः उपहिताः सन्तः परे इतः परमुक्ता इत्यर्थः पदादिभूता अभिनिधीयन्ते।

अदादवर्चोऽजनयन्ताव्यत्या
अभेदयोपाष्टिरवन्त्ववीरता।
अमुमुक्तममतयेऽनशामहा
अव त्वचोऽवीरतेऽवांस्यवोऽरथाः ॥ १७ ॥

के ते परे इत्यपेक्षायाम् आह अदादित्यादि। अदात्, अवर्चः, अजनयन्त, अव्यतैः, अभेत्, अयोपाष्टि, अवन्तु, अवीरता, अमुमुक्तम्, अमतये, अनशामहै, अवत्वचः, अवीरते, अवांसि, अवः, अरथाः,—इत्येतेषां पदानामादिभूतोऽकारः अभिनिधीयते सर्वैरेव प्राकृतवैकृतैरेकारौकारैः उपहिताः इत्यर्थः। यथा—नोऽदात् ( ऋ' १।३०।१६ ), अमर्त्योऽवर्च ( ऋ' ६।१२।३ ), देवासोऽजनयन्त ( ऋ' १०।८८।८ ) इत्यादि।

वासोवायोऽभिभुवे कवष्यः
सङ्क्रन्दनो धीजवनः स्वधावः।
उत्सादत ऋतावः सगर्भ्यो
हिरण्यशृङ्ग इति चोपधाभिः ॥ १८ ॥

वासोवायः, अभिभुवे, कवष्यः, सङ्क्रन्दनः, धीजवनः, स्वधावः,

उत्सादत:, ऋतावः, सगर्भ्यः, हिरण्यशृङ्गः इत्येतैश्चोपहितः अकारोऽभिनिधीयते। यथा—वासोवायोऽवीनाम् ( ऋ॰ १०।२६।६ ), अभिभुवेऽभिभङ्गाय ( ऋ॰ २।२१।२ ), धीजवनोऽसि ( ऋ॰ ८।८८।३ ), स्वधावोऽस्ति ( ऋ॰ १।३६।१२ ) इत्यादि।

येऽरा रायोऽध मेऽधायि
नोऽहिरग्नेऽभिदासति।
जायमानोऽभवोऽग्नेऽयं
न्रतोऽर्पोऽहोऽतिपिप्रति ॥ १९ ॥

येऽराः ( ऋ॰ १०।७८।४ ), रायोऽध ( ऋ॰ ६।३६।१ ), मेऽधायि ( ऋ॰ १।१६२।७ ), नोऽहिः ( ऋ॰ ६।५०।१४ ), अग्नेऽभिदासति ( ऋ॰ १।७९।११ ), जायमानोऽभवः ( ऋ॰ ८।१९।४ ), अग्नेऽयं ( प्रैषिके ) न्रतोऽपः, ( ऋ॰ २।२२।४ ), अंहोऽतिपिप्रति ( ऋ॰ ७।६६।५ ) एतेषु अकारो यथागृहीतम् अभिनिधीयते।

जम्भयन्तोऽहिं मरुतोऽनुभर्त्रौ
यवसेऽविष्यन्वयुनेऽजनिष्ट।
वृत्रहत्येऽवीः समरेऽतमानाः
मरुतोऽमदन्नभितोऽनवन्तः। २० ॥

जम्भयन्तोऽहिं, मरुतोऽनुभर्त्रौ, यवसेऽविष्यन्, वयुनेऽजनिष्ट, वृत्रहत्येऽवीः, समरेऽतमानाः, मरुतोऽमदन्, अभितोऽनवन्तः— इत्येतेषु चाकारो यथागृहीतमभिनिधीयते।

ब्रुवतेऽध्वं स्तवसेऽवाचि मेऽरपद्
दधिरेऽग्ना नहुषोऽस्मत्पुरोऽभिनत् ।
उप तेऽधां वहतेऽयं यमोऽदिति
र्जनुषोऽया सुवितोऽनु श्रियोऽधित ।२१ ॥

ब्रुवतेऽध्वन्, तवसेऽवाचि, मेऽरपत्, दधिरेऽग्ना, नहुषोऽस्मत्, पुरोऽभिनत्, उप तेऽधाम्, वहतेऽयम्, यमोऽदितिः, जनुषोऽया, सुवितो-ऽनु, श्रियोऽधित—इत्येतेषु चाकारो यथागृहीतमभिनिधीयते ।

वपुषेऽनु विशोऽयन्त सन्तोऽवद्यानि खेऽनसः ।
भरन्तोऽवस्यवोऽवोऽस्तु बुध्नोऽजो मायिनोऽधमः ॥२२॥

वपुषेऽनु, विशोऽयन्त, सन्तोऽवद्यानि, खेऽनसः, भरन्तोऽवस्यवः, अवोऽस्तु, बुध्नोऽजः, मायिनोऽधमः—इत्येतेषु चाकारो यथागृहीतम् अभिनिधीयते ।

देवोऽनयत्पुरूवसोऽसुरघ्नो
भूतोऽभि श्वेतोऽरुषस्तेन नोऽद्य ।
येऽजामयस्तेऽरदन्नोऽधिवक्ता
तेऽवर्द्धन्त तेऽरुणेभिः सदोऽधि ॥ २३ ॥

देवोऽनयत्, पुरूवसोऽसुरघ्नः, भूतोऽभि, श्वेतोऽरुषः, तेन नोऽद्य येऽजामयः, तेऽरदत्, नोऽधिवक्ता, तेऽवर्द्धन्त, तेऽरुणेभिः, सदोऽधि—इत्येतेषु चाकारो यथोक्तम् अभिनिधीयते ।

स्वाध्योऽजनयन् धन्वनोऽभिमाती-

रग्नेऽप दृह मनसोऽधि योऽध्वनः ।

योऽह्नस्तेऽविन्दंस्तपसोऽधि न योऽधि

पादोऽस्य योऽति ब्राह्मणोऽस्य योऽनयत् ॥२४॥

स्वाध्यायोऽजनयन्, धन्वनोऽभिमातीः, अग्नेऽपदृह, मनसोऽधि, योऽध्वनः, योऽह्नः, तेऽविन्दन्, तपसोऽधि, न योऽधि, पादोऽस्य, योऽति, ब्राह्मणोऽस्य, योऽनयत्—इत्येतेषु चाकारा यथागृहीतम् अभिनिधीयते ।

सोऽस्माकं यो द्वेषोभ्योऽन्यकृतेभ्य-

स्तेभ्योऽकरं पयस्वन्तोऽमृताश्च ।

अन्योऽर्वाकेऽथो इति नोदयेषु

पुत्रः पराके च परावतश्च ॥ २५ ॥

सोऽस्माकं यः, द्वेषोभ्योऽन्यकृतेभ्यः, तेभ्योऽकरम्, पयस्वन्तोऽमृताः इत्येतेषु चाकारो यथागृहीतम् अभिनिधीयते ।

अन्यः, अर्वाके, अथो—एतेषु उदयेषु परभूतेषु, पुत्रः, पराके, परावतः—एतेषु च पूर्वपदेषु अन्यादीनामकारो यथासङ्ख्यम् अभिनिहितो न भवति । "अथाभिनिहितः सन्धिः" (२।१३) इत्यनुक्रम्य पादादिरकार एकीभवतीति यदुक्तं तस्यायमपवादः । यथा—न पुत्रो अन्यः (ऋ० ७।१०३।३), पराके अर्वाके (ऋ० ८।८।१५), परावतो अथ (ऋ० ८।३८।५) ।

अन्तःपादं च वयो अन्तरिक्षे

वयोअस्याश्रयो हेतयस्त्वयः ।

**वो अन्धसः शयवे अश्विनोभये**

**अवो अधि साञ्जयो जामयः पयः ॥ २६ ॥**

"अन्तः पादम्" ( २।१४ ) इत्युपक्रम्य यदुक्तं तस्यायम् अपवादः। वयो अन्तरिक्षे, वयो अस्य, वो अन्धसः, शयवे अश्विना, अवो अधि इत्येतेषु अकारो नाभिनिहितो भवति। अश्रयः, हेतयः, वयः, उभये, साञ्जयः, जामयः, पयः इत्येतैश्चोपहितोऽकारो नाभिनिहितो भवति। यथा—अश्रयो अद्रिम् ( ऋ॰ १०।११२।८ ), हेतयो अस्य ( ऋ॰ ८।५०।२ ), वयो अस्य ( ऋ॰ ४।५८।३ )।

**प्रकृत्येतिकरणादौ प्रगृह्याः**

**स्वरेषु चार्ष्यां प्रथमो यथोक्तम्।**

**सहोदयास्ताः प्रगृहीतपदाः**

**सर्व्वत्रैव तावचरान्तास्तु नेवे ॥ २७ ॥**

इतिकरणादौ परभूते प्रगृह्याः प्रकृत्या भवन्ति पदसंहितायाम् इति शेषः। यथा—इन्द्राग्नी इति।

स्वरेषु च परभूतेषु आर्ष्यां संहितायाम् इत्यर्थः प्रगृह्याः प्रकृत्या भवन्ति। यथा—राजन्तो अस्य ( ऋ॰ ६।७०।२ ), इन्द्रवायू इमे ( ऋ॰ १।२।४ )।

प्रथमः प्रगृह्यः 'ओकार आमन्त्रितजः प्रगृह्यः' (१।२८) इत्यादिना य उक्तः प्रग्रह्यः स आर्ष्यां संहितायां यथोक्तमेव सन्धिमाप्नोति न तु प्रकृत्या भवति इत्यर्थः। यथा—इन्दविन्द्राय (ऋ॰ ८।२६।६ ), वाय उक्थेभिः ( ऋ॰ १।२।२ )।

सह उदयेन वर्त्तन्ते इति सहोदयास्ताः संहिताः प्रगृहीतपदसंज्ञा।

वेदितव्याः। सर्वत्रैव पदसंहितायाम् इतिकरणादौ परभूतेषु आर्ष्यां च स्वरेषु उदयेषु परभूतेषु प्रगृह्यीतपदा एव।

इवे परभूते त्र्यक्षरपर्य्यन्ताः पुनः प्रगृह्या प्रकृत्या न भवन्ति आर्ष्यां संहितायाम्। यथा—दम्पतीव (ऋ॰ २।३९।२)। आर्ष्यामिति किम् पदसंहितायाम् 'दम्पती इवेति दम्पतीऽइव' इति स्यात्।

आर्ष्यामिव सन्ध्ययकारपूर्व्वो
विवृत्तेश्च प्रत्ययः सन्नुकारः।
ऊकारादौ स्विति पूषेत्यकारे
न चेत्तदेकाक्षरतत्पूर्व्वम् ॥ २८ ॥

सन्धौ भवः सन्ध्यः। सन्ध्यो यकारः पूर्व्वो यस्मादिति सन्ध्ययकार-पूर्वः उकारः प्रकृत्या भवति आर्ष्यामिव। यथा—प्रत्यु अदर्शि (ऋ॰ ७।८१।१)।

विवृत्तेश्च प्रत्ययः परभूतः उकारः प्रकृत्या भवति। यथा—अभूदुभाउ अंशवे (ऋ॰ १।४६।१०), धनसाउ ईमहे (ऋ॰ १०।६५।१०), सन्ध्ययकारपूर्व इति किम्—'जरायु अजरम्' इत्यतः जरायुजरम् (ऋ॰ १०।१०६।६)।

ऊकारादौ पदे परभूते सु इत्येतत् पदं प्रकृत्या भवति। यथा—ताभिरू षु ऊतिभिः (ऋ॰ १।११२।१)।

पूषा इत्येतत् पदम् अकारादौ पदे प्रत्यये परभूते सतीति यावत् प्रकृत्या भवति, यदि तत् पूषा इति पदम् एकाक्षरपूर्वं न भवति, तत्वेतिपदपूर्वञ्च न भवति। यथा—पूषा अविष्टु (ऋ॰ १०।२६।८), न चेत्तदेकाक्षरतत्पूर्वमिति किम्—न तं पूषापि (ऋ॰ ६।५४।४), तत्र पूषाभवत् (ऋ॰ ६।५७।४)।

श्रद्धा सम्राज्ञी सुशमी स्वधोती
पृथुज्रयी पृथिवीषा मनीषा ।
अया निद्रा ज्या प्रपेति स्वराणां
मुख्ये परे पञ्चमषष्ठयोश्च ॥ २९ ॥

स्वराणां मध्ये मुख्ये स्वरे अकारे इति यावत् परभूते सति पञ्चमषष्ठयोश्च इकार ईकारश्च इत्येतयोरिति यावत् परभूतयोः सतोश्च श्रद्धा, सम्राज्ञी, सुशमी, स्वधोती, पृथुज्रयी, पृथिवीषा, मनीषा, अया, निद्रा, ज्या, प्रपा—इत्येतानि पदानि प्रकृतया भवन्ति । यथा—श्रद्धा इत् ( ऋ० ७।३२।१४ ), सम्राज्ञी अधिदेवृषु ( ऋ० १०।८५।४६ ) सुशमी अभूवन् ( ऋ० १०।२८।१२ ) इत्यादि ।

स्वरे पादादा उदये सचेति
ष्वन्तं जोषं चर्षणीश्चर्षणिभ्यः ।
एकारान्तं मित्रयोरस्मदीवन्
नमस्युरित्युपधं चेत्यपृक्तम् ॥ ३० ॥

सचा इत्येतत् प्रकृतया भवति पादादौ स्वरे उदयभूते परभूते सति । यथा—सचाँ उद्यत् (ऋ० ७।८१।२) । स्वरे पादादौ इति किम्—सचैँषु सवनेष्वा ( ऋ० १।८।३ ) ।

षु इत्येवमन्तं पदं, जोषं, चर्षणी, चर्षणिभ्यः, एकारान्तं पदं, मित्रयोः, अस्मत्, ईवत्, नमस्युः—इत्येतानि उपधाभूतानि यस्य तत्तादृशम् 'आ' इति पदं प्रकृतया भवति पादादौ स्वरे उदयभूते इति शेषः । यथा—जोषम् आँ इन्द्रः ( ऋ० ८।९४।६ ), चर्षणीभ्य आँ आविः ( ऋ० ६।४८।१५ ) ।

**एकारौकारपरौ च कण्ठ्यौ**

**लुशाद्वाग् गोतमे चाभिनन्त ।**

**विभ्वा विधर्त्ता विपन्या कदा या**

**मातेत्यकारेऽप्यपादादिभाजि ॥ ३१ ॥**

पादादौ एकारश्च ओकारश्च परौ ययोः कण्ठ्ययोः अकाराकारयोः तौ तयोक्तौ कण्ठ्यौ लुशाद्दषेः लुशऋषिदृष्टसूक्तात् ( ऋ॰ १०।३५ ) प्राक् प्रकृतया भवतः । यथा—ऋतस्य एकम् ( ऋ॰ ८।१००।५ ), उपस्थाँ एका ( ऋ॰ १।३५।६ )। लुशाद्वागिति किम्—'महित्वा एकः' इत्यतः महित्वैकः ( ऋ॰ १०।१२१।३ )। पादादाविति किम्— 'मा एनम्' इत्यतः मैनम् ( ऋ॰ १०।१६।१ )।

गोतमऋषिदृष्टे च मन्त्र 'अभिनन्त' इतीएतत् पदं प्रकृतया भवति एकारौकारयोः परभूतम् सत् इति शेषः। यथा—अभिनन्त एवैः ( ऋ॰ १।७८।२ )।

विभ्वा, विधर्त्ता, विपन्या, कदा, या, माता इत्येतानि पदानि प्रकृतया भवन्ति ऋकारादौ पदे परभूते सति। अपादादिभाजि अपि ऋकारादौ पदे परभूते इत्यपिशब्दार्थः। यथा—विधर्त्ताँ ऋतम् ( ऋ॰ २।२८।४ ), विपन्याँ ऋतस्य ( ऋ॰ ४।१।१२ ) इत्यादि।

**परुच्छेपे भीषा पथेत्यकार**

**एवाँ अग्निमविषु सा प्लुतोपधा ।**

**सचाद्यो या विहिता विवृत्तयः**

**प्लुतोपधान्ता अनुनासिकोपधाः ॥ ३२ ॥**

अकारे परभूते सति भीषा, पथा इत्येते पदे परुच्छेपऋषिदृष्टे

मन्त्रे प्रकृतया भवतः। यथा—भीषाँ अद्रिवः ( ऋ' १।१३३।६ ) पथाँ अनेहसा ( ऋ' १।१२९।८ )। परक्षेपे इति किम्—महस्पथाति ( ऋ' १।१०५।६ )। अकारे इति किम्—पथेव ( ऋ' १।१३९।४ )।

एवाँ अग्निमित्येतद् यथागृहीतं भवति अत्रिमण्डले। एतच्च प्लुतोपध-संज्ञकं सन्धानं भवति। यथा—एवाँ अग्निम् ( ऋ' ५।२५।८, ऋ' ५।६।१० )। अत्रिग्रहणं किम्—एवाग्निं सहस्यम् (ऋ' ७।४२।६)।

'स्वरे पादादौ' ( २।३० ) इत्यतः एवाँ अग्निमत्रिषु सा प्लुतो-पधाः ( २।३२ ) इत्यादिषु प्रकृतिभावद्वारा या विवृत्तयो विहिता स्ता अनुनासिकोपधा भवन्ति। यथा—सचाँ उग्रत् ( ऋ' ७।८१।२ ) इत्यादि।

**सेदु सास्मिन् सेमभि साभिवेगः**
**सेदृभवः सोपमा सौषधीरनु।**
**सास्मा अरं सोत नः सेन्द्र विश्वा**
**सेति सास्माकमनवद्य सासि ॥ ३३ ॥**

यथागृहीतान्येव सेदुप्रभृतीनि भवन्ति। एतेषु विवृत्तिलोपो निपात्यते। तथाच, 'सः इत् उ', 'सः अस्मिन्', 'सः ईम् अभि', 'सः अभिवेगः', 'सः इत् ऋभवः', 'सः उपमा', 'सः ओषधीः अनु', 'सः अस्मै अरम्', 'सः उत नः', 'सः इन्द्र विश्वा', 'सः इति', 'सः अस्माकम् अनवद्य', 'सः असि' इत्यतः यथाक्रमं सेदु ( ऋ' १।३२।१५ ), सास्मिन् ( १०।४४।५ ), सेमभि ( ऋ' ८।७४।७ ), साभिवेगः ( ऋ' १०।२७।१ ), सेदृभवः ( ऋ' ४।३७।६ ), सोपमा ( ऋ' १।३१।१५ ), सौषधीरनु ( ऋ' ८।४३।९ ), सास्मा अरम् (ऋ' २।१७।६ : ऋ' २।१८।२), सोत नः ( ऋ' २।२४।१ ), सेन्द्रविश्वा ( ऋ' २ १३।११ ), सेति ( ऋ' २।१२।५ ), सास्माकमनवद्य ( ऋ' १।१२९।१ ), सासि ( ऋ' २।१३।२ ) इत्येतानि भवन्ति।

सेदग्ने सेदग्निर्वासिष्ठ

साप्माकेभिः सेदुग्रः सेमे ।

सैना सैनं सेम सोदञ्चं

सेमां सोषां सेशे सेदीशे ॥ ३४ ॥

सेदग्ने (ऋ॰ ४।४।७), सेदग्निर्वासिष्ठ (ऋ॰ ७।१।१४), साप्माकेभिः (ऋ॰ ७।१२।४), सेदुग्रः (ऋ॰ ७।४०।३), सेमे (ऋ॰ ८।७३।२), सैना (ऋ॰ ३।८।६), सैनं (ऋ॰ ८।२२।१), सेम (ऋ॰ १।१४।११), सोदञ्चं (ऋ॰ २।१५।६), सेमां (ऋ॰ २।२४।१), सोषां (ऋ॰ १०।८६।१६), सेशे (ऋ॰ १०।६८।८), सेदीशे (ऋ॰ १०।८६।१६)—इत्येतानि पदानि यथागृहीतं भवन्ति।

नू इत्था ते सानो अव्ये

वो अस्मे वासौ वेद्यस्याम् ।

धिषायेमे नू अन्यता चित्

पादादौ नू इन्द्रोतार्वाक् ॥ ३५ ॥

नू इत्था ते (ऋ॰ १।१३२।४), सानो अव्ये (ऋ॰ ८।८१।१), वो अस्मे (ऋ॰ १।१२८।८), वासौ (ऋ॰ ५।१७।३), वेद्यस्याम् (ऋ॰ २।३।४), धिषायेमे (ऋ॰ ७।७२।३), नू अन्यत्रा चित् (ऋ॰ ८।२४।११), पादादौ वर्त्तमानं 'नू इन्द्र' इति (ऋ॰ ७।२७।५), ऊत्यर्वाक् (ऋ॰ १०।१५।४)—इत्यैतानि यथागृहीतं भवन्ति।

उदू अयान् रजेषितं धनर्चं

शतर्चसं दशोण्ये दशोण्ये ।

यथोह्हिषि यथोचिषि दशोणिं
स्वरोदयं पिबा इमं रथोह्‌ल् ॥ ३६ ॥

उद्रू अयान् ( ऋ॰ ६।७१।५ ), रजेषितम् ( ऋ॰ ८।४६।२८ ), धनर्चम् ( ऋ॰ १०।४६।५ ), शतचसम् ( ऋ॰ ७।१००।३ ), दशोण्ये ( ऋ॰ ६।२०।४ ), दशोण्ये ( ऋ॰ ८।५२।२ ), यथोचिषे ( ऋ॰ ८।८२।२), यथोह्हिषे ( ऋ॰ ८।५।३ ), दशोणिम् ( ऋ॰ ६।२०।८ ), पिबा इमम् ( ऋ॰ ८।१७।१ ), रथोह्‌ल् ( ऋ॰ १०।१४८।३ ) इत्येतानि यथागृहीतं भवन्ति ।

वीरास एतन तमू अक्रण्वं-
स्तारेव प्रैषयू रोदसीमे ।
धन्वर्णसः सरपसः सचोत
प्रधीव वील्‌ उत सर्तवाजौ ॥ ३७ ॥

वीरास एतन ( ऋ॰ ५।६१।४ ), तमू अक्रण्वन् ( ऋ॰ १०।८८।१० ), ततारेव ( ऋ॰ ७।३३।३ ), प्रैषयुः ( ऋ॰ १।१२०।५ ), रोदसीमे ( ऋ॰ ७।८७।२ ), धन्वर्णसः ( ऋ॰ ५।४५।२ ), सरपसः ( ऋ॰ २।१३।१२ ), सचोत (ऋ॰ ५।१६।५), प्रधीव ( ऋ॰ २।३९।४ ), वील्‌ (ऋ॰ १।३९।२ ), सर्तवाजौ ( ऋ॰ ३।३२।६ ) इत्येतानि च यथागृहीतं भवन्ति ।

अश्विनेव पीवोपवसनानां
महो आदित्यानुषसामिवेतयः ।
स्तोतव अंव्यं च स्त्रजा इयध्यै
सचेन्द्र सानो अव्यये स्वधामिता ॥ ३८ ॥

अश्विनेव ( ऋ॰ ८।८।८ ), पीवोपवसनानाम् ( प्रैषिके ), मह्नो-आदित्यान् (ऋ॰ १०।६३।५), उपसामिवेतयः ( ऋ॰ १०।८९।४ ) स्तोतव अंब्यम् ( ऋ॰ ८।७२।५ ), सूजा इयर्ध्वै ( ऋ॰ ६।२०।८ ), सचेन्द्र ( ऋ॰ १।१०।४ ), मानो अव्यये ( ऋ॰ ९।८६।३ ), स्वधामिता ( ऋ॰ ५।३४।१ ) इत्येतानि च यथागृहीतं भवन्ति ।

गोओपशा गोऋजीकप्रवादौ
मनीषा आ त्वा पृथिवी उत द्यौः ।
मनीषावसूरणया इहाव
बृहती इवेति च यथागृहीतम् ॥ ३९ ॥

गोओपशा ( ऋ॰ ६।५३।९ ), गोऋजीक ( ऋ॰ ७।२१।१ ), मनीषा आ त्वा ( ऋ॰ १०।२९।३ ), पृथिवी उत द्यौः ( ऋ॰ १।९४।१६ ), मनीषावस्यः ( ऋ॰ ३।३।५ ) रणया इह ( ऋ॰ ८।३४।११ ), आव ( ऋ॰ १०।१०५।१ ), बृहती इव (ऋ॰ १।५९।४)। एतानि च यथा—गृहीतं भवन्ति ।

योनिमारैगगादारैगारैगदुर्थीण आह्वणक ।
हन्त्यासद्रुप आरुपितमनायुधास आसता ॥ ४० ॥

योनिमारैक् ( ऋ॰ १।१२४।८ ), अगादारैक् ( ऋ॰ १।११३।२ ), आरैक् ( ऋ॰ १।११३।१६ ), दुर्योण आह्वणक् ( ऋ॰ ५।३२।८ ), हन्त्यासत् ( ऋ॰ ७।१०४।१३ ), रूप आरुपितम् ( ऋ॰ ४।५।७ ), अनायुधास आसता ( ऋ॰ ४।५।१५ )। एतानि च यथा—गृहीतं भवन्ति ।

अस्त्वासतो निरविध्यदभ्यादेवं क आसतः ।
न्याह्वणङ् नकिरादेवो न्याविध्यदेनमायनक ॥ ४१ ॥

अस्वासत: ( ऋ' ७।१०४।८ ), निराविध्यत् (ऋ' ८।७७।६), अभ्यादेवम् ( ऋ' २।२२।४ ), क आसत: ( ऋ' ५।१२।४ ) न्यावृणक् ( ऋ' १।१०१।२ ), नकिरादेव: ( ऋ' ८।५८।२ ), न्याविध्यत् ( ऋ' १।३३।१२ ), एनमायुनक् ( ऋ' १।१६३।२ )। एतानि च यथा—गृहीतं भवन्ति।

अहिहन्नारिणक्पथ आयुञ्जातामुदावता।
रिक्थमारैग्य आयुक्त कुरुश्रवणमावृणि ॥ ४२ ॥

अहिहन्नारिणक् पथ: (ऋ' २।१३।५), आयुञ्जाताम् (ऋ' १।१५७।१), उदावता ( ऋ' ६।१८।८ ), रिक्थमारैक् ( ऋ' ३।२१।२), य आयुक्त ( ऋ' ५।१७।३ ), कुरु श्रवणमावृणि ( ऋ' १०।३३।४ )। एतानि च यथा—गृहीतं भवन्ति।

शुनश्चिच्छेपं निदितं नरा वा शंसं पूषणम्।
नरा च शंसं दैव्यं ता अनानुपूर्व्यसंहिता: ॥ ४३ ॥

शुनश्चिच्छेपं निदितम् ( ऋ' ५।२।७ ), नरा वा शंसं पूषणम् ( ऋ' १०।६४।३ ), नरा च शंसं दैव्यम् ( ऋ' ८।८६।४२ ), इत्येतेषां त्रयाणां पदानुपूर्व्येण संहिता नास्ति पदपाठक्रमानुसारेण संहितापाठो न भवतीत्यर्थ:। अतस्ता अनानुपूर्व्यसंहिता उच्यन्ते। तथा च एतेषां पदपाठा यथाक्रमम्—शुन: शेपं चित् निदितम्, नरा शंसं वा पूषणम्, नरा शंसं च दैव्यम्।

यतो दीर्घस्ततो दीर्घा विवृत्तयो
द्विषन्ध्यस्तूभयत: स्वरस्वरा:।
प्राच्यपञ्चाल उपधानिभोदया:
शाकल्यस्य स्थविरेस्तरा स्थिति: ॥ ४४ ॥

'स्वरान्तरं' तु विवृत्तिः ( ऋ॰ २।१ ) इत्युक्तम्। इदानीं विवृत्ति-प्रकारभेदा उच्यन्ते। यत्र विवृत्तिषु दीर्घः स्वरो भवति पुरस्तात् पश्चात् उभयतो वा ता दीर्घा विवृत्तय इति वेदितव्याः। यथा—गोषा इन्दुः ( ऋ॰ ८।२।१० ), य आनयत् ( ऋ॰ ६।४५।१ ), ता आपः ( ऋ॰ ७।४९।१ ).

द्वौ सन्धी यासां विवृत्तीनां ता द्विसन्धिसंज्ञकाः, तासु उभयतः स्वरस्वरा वेदितव्याः। मध्यगतस्य स्वरस्य उभयतः स्वरौ यासां विवृत्तीनां ता उभयतःस्वरस्वराः इत्यर्थः, यथा—अभूदुभाउ अंशवे ( ऋ॰ १।४६।१० )।

प्राच्यपञ्चाललक्षितानां पदवृत्तीनाम् उपधाः प्राच्यपञ्चालोपधाः तन्निभास्तादृशा उदया यासां तास्तथोक्ताः। तथाच, परभूतस्य अकारस्य पूर्वस्थितयोरेकारौकारयोरिव भवेदुच्चारणमित्यर्थः। एतत् तु स्थविरस्य शाकल्यस्य मतम्।

इतरा अन्यविधा शाकलानां स्थितिः प्राकृतोदयत्वं नाम।

# तृतीयं पटलम्।

**उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।**

**आयामविश्रम्भाक्षेपैस्त उच्यन्तेऽक्षराश्रयाः॥ १॥**

आयामो नाम वायुनिमित्तमूर्द्ध्वगमनं गात्राणाम्। तेन य उच्यते स उदात्तः। विस्रम्भो नाम अधोगमनं गात्राणाम् वायुनिमित्तम्। तेन य उच्यते सोऽनुदात्तः। आक्षेपो नाम तिर्य्यग्गमनं गात्राणाम् वायुनिमित्तम्। तेन य उच्यते स स्वरितः।

स्वरोऽक्षरमित्युक्तम्। अक्षरमाश्रयभूतं येषां ते तथोक्ताः। स्वराणामुदात्तादीनामक्षरैः सह धर्म्मधर्म्मिसम्बन्धो न तु व्यञ्जनै रित्यर्थः।

**एकाक्षरसमावेशे पूर्व्वयोः स्वरितः स्वरः।**
**तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा॥ २॥**

एकाक्षरसमावेशे सति पूर्वयोरुदात्तानुदात्तयोरिति यावत् स्वरितः स्वरो निष्पद्यते। यथा—'ते। अवर्धन्त' इत्यतः तेऽवर्धन्त (ऋ १।८५।७)।

तस्य स्वरितस्य आदौ अर्द्धमात्रा एकमात्रिकह्रस्वस्वरस्थले इति शेषः अर्द्धमेव वा द्विमात्रस्वरस्य अर्द्धम् एका वा मात्रा इत्यर्थः उदात्तात् उदात्ततरा उदात्तादपि उदात्ततरा इत्यर्थः।

**अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।**
**उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम्॥३॥**

स्वरितस्य परः शेषः अवशिष्यमाणः अर्द्धमात्रात्मकः एकमात्रात्मको वा अंश इत्यर्थः उदात्तवत् श्रूयते चेत् यदि उदात्तमक्षरं स्वरितं वा परं न भवति। यदि तु उदात्तं स्वरितं वा परं स्यात् तदा स्वरितस्य शेषोंऽशः अनुदात्तः स्यात्, न तु उदात्तवत् श्रूयते इत्यर्थः। यथा—'तिष्यो३ यथा' (ऋ ५।५४।१३) इत्युदात्तपरस्योदाहरणम्। 'यो३ह्या' (ऋ १०।१४४।४) इति स्वरितपरस्योदाहरणम्।

**उदात्तपूर्व्वं स्वरितमनुदात्तं पदेऽक्षरम् ।**
**अतोऽन्यत् स्वरितं स्वारं जात्यमाचक्षते पदे ॥४॥**

पदे एकस्मिन् पदे उदात्तपूर्वं उदात्तः पूर्वं यस्य तं तथाविधम् अनुदात्तं स्वरितं जानीयात् । यथा—इन्द्रः, होता इत्यादि ।

अतः प्रकृतादुदात्तपूर्वात् स्वरितात् स्वराद् अदन्यद् एकस्मिन्नेव पदे स्वरितं तं स्वारं जात्यमाचक्षते व्याड़िप्रभृतयः । जात्या स्वभावेनैव उदात्तानुदात्तसङ्गतिं विना इति यावत् जातो जात्यः । यथा—स्वः, क्व, न्यक्, कन्या ।

**उभाभ्यां तु परं विद्यात् ताभ्यामुदात्तमक्षरम् ।**
**अनेकमप्यनुदात्तं न चेत् पूर्व्वं तथागतात् ॥ ५ ॥**

उभाभ्यां जात्याद् अजात्याद् वा स्वरितात् परम् अनेकमपि एकाधिकमपि अनुदात्तम् अक्षरम् उदात्तं विद्यात् उदात्तवत् श्रूयते इत्यर्थः यदि तथागतात् स्वरितत्वमुदात्तत्वं वा प्राप्तात् पूर्वं तत् न भवति । यथा—अदब्धव्रतप्रमतिः ( ऋ २।९।१ ) । तथागतपरत्वे तु अनुदात्तं प्रकृत्यैव अवतिष्ठते उदात्तवत् न भवतीत्यर्थः । यथा—मादयस्व स्वर्णरे (ऋ ८।१०३।१४) । 'अदब्धव्रतप्रमतिर्वसिष्ठः' अत्र 'नि' इत्यत्र अनुदात्तं निर्दिष्टमुदात्तपरत्वात् ।

**उदात्तवत्येकीभाव उदात्तं सम्ध्यमक्षरम् ।**
**अनुदात्तोदये पुनः स्वरितं स्वरितोपधे ॥ ६ ॥**

यस्मिन्नेकीभावे पूर्वम् उत्तरं वा अक्षरम् उदात्तं भवति स एकीभाव उदात्तवान् इति कथ्यते तस्मिन् उदात्तवति एकीभावे

सन्ध्यमक्षरं सन्धिजातम् अक्षरम् उदात्तमेव भवतीत्यर्थः। यथा—'इन्द्र | आ | इहि | मत्सि | अन्धसः' इत्यतः इन्द्रेहि मत्स्यन्धसः ( ऋ' १।६।१ )।

स्वरितोपधे अनुदात्तोदये पुनः स्वरितेनोपहिते अनुदात्ते परभूते इत्यर्थः अनुदात्तः स्वरित मापद्यते। यथा—'मधु उदकम्' इत्यतः 'मधूदकम्'।

## इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च।
## उदात्तपूर्व्वरूपेषु शाकल्यस्यैवमाचरेत् ॥ ७ ॥

ह्रस्वयोरिकारयोः प्रश्लेषे क्षैप्रसन्धिषु अभिनिहितसन्धिषु च उदात्तपूर्वरूपेषु उदात्ते पूर्वभूते अनुदात्ते च परभूते इति शेषः शाकल्यस्य मतेन एवमाचरेत् स्वरितं कुर्य्यात् इत्यर्थः। यथा—'नु | इन्द्र' इत्यतः न्विन्द्र ( ऋ' १।८२।१ ), 'ते | अवर्धन्त' इत्यतः तेऽवर्धन्त ( ऋ' १।८५।७ )।

## माण्डुकेयस्य सर्व्वेषु प्रश्लिष्टेषु तथा स्मरेत्।
## इत्येकीभाविनो धर्म्माः परैः प्रथमभाविनः ॥८॥

माण्डुकेयस्य चाचार्य्यस्य मतेन सर्वेषु प्रश्लिष्टेषु सन्धिषु न केवलम् 'इकारयोश्च प्रश्लेषे' ( ३।७ ) इत्यर्थः तथा स्वरितमित्यर्थः स्मरेत्।

एवम्प्रकाराः उदात्तवत्येकीभाव ( ३।६ ) इत्यत आरभ्य उक्ता एकीभाविनामक्षराणां धर्म्माः स्वरधर्म्माः प्रत्येतव्याः।

परैः परभूतैः उदात्तैः सह ये एकीभावास्ते प्रथमभाविनः उदात्तभाविनः स्युः द्वयोरप्याचार्य्ययोर्मतेन। उदात्ते पूर्वभूते ये एकीभावा

स्ते कुत्रचित् कस्यचित् मतेन स्वरितयुक्ता भवन्ति परभूतैरुदात्तैरेकीभावे तु सर्वेषां मतेन सर्वत्रैव उदात्तत्वं स्यादिति निष्कर्षः। यथा—
'आऽ अच्च इत्यत : आच्चा ( ऋ ८।१५।६ ), 'प्रऽ अस्य' इत्यतः प्रास्य ( ऋ १।१२१।१३ )।

उदात्तपूर्व्वं नियतं विवृत्त्या व्यञ्जनेन वा ।
स्वर्य्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ॥९ ॥

उदात्तं पूर्व्वं यस्मादित्युदात्तपूर्वम्। उदात्तपूर्व्वम् अनुदात्तं विवृत्या व्यञ्जनेन वा अन्तर्हितमपि नियतं स्वर्य्यते स्वरितयुक्तं भवति इत्यर्थः। उदात्तपरं स्वरितपरं च अनुदात्तं तु स्वरितं न भवति। यथा—यः। इन्द्रः इत्यतः 'य इन्द्रः' ( ऋ ८।१२।१ )। 'अग्निम्। ईळे' इत्यतः अग्निमीळे ( ऋ १।१।१ )। उदात्तस्वरितोदये यथा—
'ज्या इयम्' इत्यतः 'ज्या इयम्' ( ऋ ६।७५।३ ) न तु 'ज्या इयम्'।

वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिर्हितौ च तान् ।
प्रश्लिष्टञ्च यथासन्धि स्वरानाचक्षते पृथक् ॥१०॥

विवृत्तिव्यञ्जनान्तर्हितौ स्वरौ ( ३।८ इत्यत्र निर्दिष्टौ ) यथाक्रमं वैवृत्तः तैरोव्यञ्जन इत्युच्येते। क्षिप्रसन्धिभवाः, अभिनिहितसन्धिभवाः, प्रश्लिष्टसन्धिभवाश्च स्वराः ये पूर्वमेव (३।७ इत्यत्र) निर्दिष्टा स्तान् यथासन्धि सन्धिनामानुसारतः पृथक् स्वरान् क्षैप्रं अभिनिहितं प्रश्लिष्टञ्च यथाक्रममाचक्षते कथयन्ति।

स्वरितादनुदात्तानां परेषां प्रचयः स्वरः ।
उदात्तश्रुतितां यान्ति एकं द्वे वा बहूनि वा ॥११॥

स्वरितात् परेषामनुदात्तानां प्रचयः स्वरो भवति। तानि च अनुदात्तान्यक्षराणि एकं द्वे बहूनि वा उदात्तश्रुतितां यान्ति। यथा—

इमं मे गङ्गे यमुने सरस्वति ( ऋ० १०।७५।५ ) अत्र मे इत्यस्मात् परेषां सर्वेषामेव प्रचयस्वरः।

**केचित् त्वेकमनेकं वा नियच्छन्त्यन्ततोऽक्षरम्।**

**आ वा शेषान्नियुक्तं तूदात्तस्वरितोदयम् ॥ १२ ॥**

केचिदाचार्य्यास्तु अन्तत आरभ्य एकमक्षरमनेक मनक्षराणि द्वे वाक्षरे नियच्छन्ति नीचाकुर्वन्ति अनुदात्तं कुर्वन्तीत्यर्थः। यद्वा आ शेषात् यावत् एकमक्षरमनेकं वाक्षराणि द्वे वा अक्षरे इत्यर्थः अनुदात्तं कुर्वन्ति। एकेनापि प्रचितस्वरूपं दर्शितं भवत्येवेत्यर्थः।

सर्व्व एव तु आचार्य्या उदात्तोदयम् उदात्तपरं स्वरितोदयं स्वरितपरं च अक्षरं नियुक्तं निश्चितम् अविप्रतिपत्त्या इत्यर्थः अनुदात्तं कुर्वन्ति। तत्र च प्रचयस्वरो न भवतीत्यर्थः। यथा—तमु ब्रह्माणमाहुर्यज्ञन्यम् ( ऋ० १०।१०७।६ )।

**नियमं कारणादेके प्रचयस्वरधर्मवत्।**

**प्रचयस्वर आचारः शाकल्यान्यतरेययोः ॥ १३ ॥**

नियमं नियमनं पूर्वोक्तमनुदात्तभावं कारणात् भवति इति मन्यन्ते एके आचार्य्याः। किं तत् कारणमिति चेत्—यदि हि उदात्तस्वरितोदयं प्रचितं नानुदात्तं भवेत्, तर्हि प्रचितोदात्तयोः को विशेषः स्यादिति। विशेषश्चायं यथा—प्रचितो हि स्वरितोदात्तपरोऽनुदात्तो भवति, उदात्तस्तु न तथा। एवं च कृत्वा प्रचितस्वरे आचारोऽयं शाकल्यस्य अन्यतरेयस्य च ऋषेर्मतेन।

परिग्रहे त्वनार्षान्तात् तेन वैकाक्षरीकृतात् ।
परेषां न्यासमाचारं व्यालिस्तौ चेत् स्वरौ परौ ॥१४॥

परिग्रहे वेष्टके अनार्षः इतिकरणः स च द्व्यक्षर आद्युदात्तश्च तस्मात् परेषाम् अक्षराणां न्यासमनुदात्तम् आचारं मन्यते व्यालिराचार्यः यदि तौ स्वरौ उदात्तस्वरितौ परौ भवतः। यदा तु इतिशब्दात् परं स्वरादिः शब्दो भवति तदा तेन स्वरादिना एकाक्षरीकृतात् परेषां न्यासो भवतीत्यर्थः। यथा 'सत्यानृते इति सत्यानृते' (ऋ॰ ७।४९।३), सुप्राव्या इति सुप्रऽअव्याः (ऋ॰ २।१३।८), अलला भवन्ती रित्यललाऽ भवन्तीः (ऋ॰ ४।१८।६)।

यथा सन्धीयमानानामनेकीभवतां स्वरः।
उपदिष्टस्तथा विद्यादक्षराणामवग्रहे ॥ १५ ॥

यथा येन प्रकारेण सन्धीयमानानाम् एकीक्रियमाणानां अनेकीभवतां प्रश्लेषमप्राप्नुवतां विवृत्तिव्यञ्जनतिरस्कृतानां स्वर उपदिष्टः 'उदात्तपूर्वं नियतं विवृत्त्या व्यञ्जनेन वा' (३।८) इत्यादिना 'स्वरितादनुदात्तानाम्' (३।११) इत्यादिना च अक्षराणामवग्रहे क्रियमाणेऽपि स तथैव विज्ञेय इत्यर्थः। अवग्रहात्मकमात्राकालव्यवधानाद् अप्राप्तौ वचनम्। यथा—उषःऽउषः; गणऽपतिम्; पुरःऽहितम्।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्।
जात्यवद्वा तथा वान्तौ तनूशचीतिपूर्व्वयोः ॥ १६ ॥

पद्यं पदार्द्धम्। ह्रुस्वोदात्तानां पदानां पद्यादीन् पदार्द्धस्य आदीन् उत्तरान् च असंहितवज्जानीयात्। तथा च 'अनुऽएतवै' (ऋ॑ १।२४।८) इत्यत्र 'ए' इति प्रचितं न भवति पदार्द्धद्वयस्य परस्परापेक्षाविरहात्। ह्रुस्वोदात्तानामिति किम्—उर्व॑राऽपते (८।२१।३)।

जात्येन तुल्यं जात्यवत्। यथा जात्यस्यान्तो निहन्यते अनुदात्तो भवति उदात्ते परभूते एवं 'तनूशचौ' इति पदयोः पदपूर्वार्द्धयोः सतोरन्तौ निहन्येते। तथा वा अन्तौ कुर्य्यात् यथा पद्यादींस्तु इत्यादिना उपरि प्रतिपादितम्। यथा—'तनू॒ इ॒ऽन पातम्' (ऋ॑ १०।८२।२)। अत्र स्वरितप्राप्तौ अनुदात्तकरणम्। शचौ॒इ॒ऽ पतिः (ऋ॑ ४।३०।१७)। अत्रापि ह्रुस्वोदात्तानामित्यनुवर्त्तते। पक्षान्तरे तु तनूऽनपात्, शचीऽपतिरित्येवं स्याताम्।

**त्रिमात्रयोरुत्तरयोरन्त्यापि प्रचयस्वरे।**

**मात्रा न्यस्ततरैकेषामुभे व्यालिः समस्वरे ॥ १७ ॥**

त्रीणि त्रिमात्राण्युक्तानि (ऋ॑ १।१६)। तत्र उत्तरयोः त्रिमात्रयोः 'उपरि स्विदासी३द' 'भोरिव विन्दती३ँ' इत्येतयोरिति यावत् अन्त्या मात्रा प्रचयस्वरे वर्त्तमाना सती एकेषामाचार्य्याणां मतेन न्यस्ततरा नीचतरा अनुदात्ततरा स्यात्।

व्यालिस्त्वाचार्य्य उभे अन्त्ये मात्रे 'उपरि स्विदासी३द्' इत्येतयोरिति शेषः समस्वरे पूर्वमात्राभ्यामिति शेषः प्रचितस्वरे इत्यर्थः मन्यते।

**असन्दिग्धान् स्वरान् ब्रूयादविकृष्टानकम्पितान्।**

**स्वरितं नातिनिर्हन्यात् पूर्वौ नातिविवर्त्तयेत् ॥१८॥**

सन्देहो नामास्पष्टता। उदात्तानुदात्तप्रचितान् स्वरान् असन्देहजनकान् ब्रूयात्। अविकृष्टान् विकर्षो नामाश्लिष्टता। स्वराणां स्वरैः सह सन्धीन् अनुपश्लिष्टान् कुर्य्यात्। अकम्पितान् कम्पनं नाम स्वराश्रितपाठदोषः। स च प्रायेण दाक्षिणात्यानां भवति; स च वर्ज्यः।

जात्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च।
एते स्वराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः॥ १९॥

## चतुर्थं पटलम्

स्पर्शाः पूर्व्वं व्यञ्जनान्युत्तराण्या-
स्थापितानामवशङ्गमं तत्।
घोषवत्पराः प्रथमास्तृतीयान्
स्वानुत्तमानुत्तमेषूदयेषु॥ १॥

स्पर्शाः पूर्व्वं, सर्व्वाण्येव व्यञ्जनानि स्पर्शरूपाण्यस्पर्शरूपाणि च उत्तराणि परवर्त्तीनि। आस्थापितानाम् अनन्तरोक्तानां सन्धीनां मध्ये अवशङ्गमं नाम तत् सन्धानं वेदितव्यम्। यत्र द्वयोर्व्यञ्जनयोरविकारः सः अवशङ्गमः सन्धिः। यथा—आरैक् पन्थाम् (ऋ० १।११३।१६), वषट् ते (ऋ० ७।९९।७), अजानन् पुत्रः (ऋ० १०।८५।१४)।

घोषवद्व्यञ्जनपराः प्रथमाः स्पर्शाः स्वान् स्ववर्गीयान् तृतीयान् स्पर्शान् आपद्यन्ते। यथा—यद् वाग् वदन्त्यविचेतनानि (ऋ० ८।१००।१०)

प्रथमाः स्पर्शाः स्वान् स्वान् उत्तमान् पञ्चमान् इति यावत् स्पर्शान्

आपद्यन्ते उत्तमेषु पञ्चमवर्णेषु उदयेषु सत्सु। यथा—अर्वाङ् नरा (ऋ॰ ७।८२।८)।

सर्व्वैः प्रथमैरुपधीयमानः
शकारः शाकल्यपितुश्छकारम्।
पदान्तैस्तैरेव तृतीयभूतै-
स्तेषां चतुर्थाननुदयो हकारः॥२॥

सर्व्वैः प्रथमैः स्पर्शैरुपधीयमानः शकारः शाकल्यपितुर्मतेन छकारमापद्यते। यथा—अर्वाक्छफाविव (ऋ॰ २।३९ ३), विपाट्छुतुद्री (ऋ॰ ३।३३।१)।

पदस्यान्तभूतैस्तैरेव प्रथमस्पर्शैः तृतीयत्वं प्राप्तैः उपहितो हकारस्तेषामेव प्रथमानां चतुर्थानापद्यते उदयभूतः, शाकल्यपितुर्मतेन। यथा—'अवाट् हव्यानि' इत्यतः अवाड्ढव्यानि (ऋ॰ १०।१५।१२)।

विस्थाने स्पर्श उदये मकारः
सर्व्वेषामेवोदयस्योत्तमं स्वम्।
अन्तःस्थासु रेफवर्ज्जं परासु
तां तां पदादिष्वनुनासिकां तु॥ ३॥

विस्थाने अन्यस्थाने पवर्गभिन्ने इत्यर्थः स्पर्शे उदये परभूते मकारः सर्वेषामेवाचार्य्याणां मतेन उदयभूतस्योत्तमं पञ्चमं स्वमापद्यते। यथा—'अहम् च त्वम् च' इत्यतः अहञ्च त्वञ्च (ऋ॰ ८।६२।११)।

स एव मकारोऽन्तःस्थासु पदादिभूतासु रेफवर्जितासु परासु सतीसु

तां तामन्तःस्थामपद्यते सानुनासिकाश्च भवति। यथा—'यम् यम् युजम्' इत्यतः यँय्यँय्युजम् (ऋ० २।२५।१), 'भद्रैषां लक्ष्मीः' इत्यतः भद्रैषाल्लँक्ष्मीः (ऋ० १०।७१।२)।

तथा नकार उदये लकारे
ञकारं शकारचकारवर्गयोः।
तकारो ञकारलकारयोस्तौ
तालव्येऽघोष उदये चकारम् ॥ ४ ॥

तेनैव प्रकारेण लकारे परभूते नकारो लकारमेव अनुनासिकमापद्यते। यथा—'जिगीवान् लक्षम्' इत्यतः जिगीवाल्लँक्षम् (ऋ० २।१२।४)

स एव नकारः ञकारमापद्यते शकारे चवर्गे च परतः। यथा—'वज्रिन् श्नथिहि' इत्यतः वज्रिञ्छ्नथिहि' (ऋ० १६३।५), 'आस्मान् जगम्याद्' इत्यतः आस्माञ् जगम्याद् (ऋ० ५।३३।५)।

जकारलकारयोः परभूतयोः तकारस्तावेव आपद्यते। जकारे परतो जकारम्, लकारे च लकारमित्यर्थः। यथा—'प्रयत् जिगासि' इत्यतः प्रयज्जिगासि (ऋ० १०।७३।३), अङ्गादङ्गात् लोम्नोलोम्नः इत्यतः अङ्गादङ्गाल्लोम्नोलोम्नः (ऋ० १०।१६३।६)।

चकारछकारशकारा अघोषास्तालव्याश्च एतेषु परतः तकारश्चकारमापद्यते। यथा—'तत्चक्षुः' इत्यतः तच्चक्षुः (ऋ० ७।६६।१६), यत् छर्दिः इत्यतः यच्छर्दिः (ऋ० ८।६७।६)।

छकारं तयोरुदयः शकारो
न शाकल्यस्य ता वशङ्गमानि।
रेफोष्मणोरुदययोर्मकारो-
नुस्वारं तत् परिपन्नमाहुः ॥ ५ ॥

तयोर्नकारतकारस्थाननिर्दिष्टयोः ञकारचकारयोरुदयभूतः परभूत इति यावत् शकारः छकारमापद्यते। यथा—'वज्रिन् श्नथिहि' इत्यतः वज्रिञ् छ्नथिहि' ( ऋ॰ १।६३।५ )।

शाकल्यस्य आचार्यस्य मतेन तु शकारश्छकारं नापद्यते। यथा—घनेव वज्रिञ् श्नथिहि ( ऋ॰ १।६३।५ )।

ता तानि सन्धानानि "घोषवत्पराः प्रथमास्तृतीयान्" ( ४।१ ) इत्येवमादीनि वशङ्गमानि वेदितव्यानि। अवशङ्गमसन्धौ इव न ह्यवापरिणतानि व्यञ्जनानि संयोगं गच्छन्ति। अतो वशङ्गमानीत्युच्यन्ते।

रेफे च ऊष्मणि च उदयभूते परभूते सति मकारोऽनुस्वारमाप्यते। तच्च सन्धानं 'परिपन्नम्' इत्याचार्या आहुः। यथा—होतारं रत्नधातमम् ( ऋ॰ १।१।१ ), वृषभं शण्डिकानाम् ( ऋ॰ २।३०।८ )।

ङकारेऽघोषोष्मपरेऽन्तरैके

ककारं टकारनकारयोस्तु।

आहुः सकारोदययोस्तकारं

ञकारे शकारपरे चकारम् ॥ ६ ॥

ङकारे अघोषोष्मपरे सति अन्तरा ङकारस्य अघोषोष्मणश्च इति शेषः ककारमागममाहुरेके आचार्याः इत्यर्थः। यथा—'प्रत्यङ् स विश्वा' इत्यतः 'प्रत्यङ्क् स विश्वाः' ( ऋ॰ ८।८०।३ )।

टकारनकारयोस्तु सकारोदययोः सकारपरयोः सतोः अन्तरा तकारम् आगमम् आहुरेके आचार्या इति शेषः। यथा—ह्यप्राट्त् सः ( ऋ॰ १०।३२।७ )।

ञकारे नकारस्थानगते इति शेषः शकारपरे सति अन्तरा चकार-

मागममाहुः एके इति शेषः। यथा—'वज्रिन् अथिहि' इत्यतः वज्रिञ्च्छ्नथिहि ( ऋ॰ १।६३।५ )।

तेऽन्तःपाता अकृतसंहितानाम्

ऊष्मान्तानां पटलेऽस्मिन् विधानम्।

चित्कम्भनेनोष्मलोपः ककुद्मान्

सम्राट्शब्दः परिपन्नापवादः ॥ ७ ॥

ते 'ङकारेऽघोषोष्मपरेऽन्तरैके' ( ४।६ ) इत्यादयः अन्तःपातसंज्ञाः सन्धयो वेदितव्याः।

येषामूष्मान्तानां पुरस्तात् सन्धिर्न विहितस्तेषामिह पटले सन्धान-मधिकृतं वेदितव्यम्।

'चित्कम्भनेन' इत्यत्र सकारलोपो निपात्यते।

'ककुद्मान्' इत्यत्र दकारो निपात्यते। 'स्वानुत्तमानुत्तमेषूदयेषु' ( ४।१ ) इति नकारो न भवतीत्यर्थः।

'सम्राट्' इत्ययं शब्दः परिपन्नस्य सन्धेः अपवादभूतो ज्ञातव्यः। नात्र मकारस्यानुस्वारो भवेदिति भावः। शब्दग्रहणं सम्पूर्वस्य राजतेरेकपदीभूतस्य सर्वप्रत्ययान्तस्य सर्वविभक्तियुक्तस्य सर्वलिङ्गयुक्तस्य च ग्राहकं भवति। सम्राजन्तम् अध्वराणाम् ( ऋ॰ १।२७।१ )।

विसर्जनीय आकारमरेफी घोषवत्परः।

ओकारं ह्रस्वपूर्व्वस्तौ सन्धी नियतप्रश्लितौ ॥८॥

अरेफो रेफरहितः सहोपधो दीर्घपूर्व्वो विसर्जनीयः आकार-मापद्यते घोषव्यञ्जनपरः सन्। यथा—'पुनानाः यन्त्यनि विशमानाः' इत्यतः पुनाना यन्त्यनि विशमानाः ( ऋ॰ ७।४८।१ )।

सन्नोपधो विसर्जनीयो ह्रस्वपूर्व्वोऽरिफितः सन्निति शेषः ओकारमापद्यते घोषवत्परः सन्। यथा—'देवः देवेभिः' इत्यतः 'देवोदेवेभिः' (ऋ' १।१।५)।

तावेतौ सन्धी नियतप्रश्लिष्टसंज्ञौ वेदितव्यौ। प्रथमो नियतो द्वितीयश्च प्रश्लिष्टः।

सर्व्वोपधस्तु स्वरघोषवत्परो
रेफं रेफी ते पुना रेफसन्धयः।
रेफोदयो लुप्यते द्राघितोपधा
ह्रस्वस्याकामनियता उभाविमौ ॥ ९ ॥

सर्वोपधो दीर्घोपधो ह्रस्वोपधश्च इति यावत् स्वरपरो घोषवत्परश्च रेफो विसर्जनीयो रेफमापद्यते। ते पुनः रेफसन्धय इत्युच्यन्ते। यथा—प्रातरग्निं प्रातरिन्द्रम् (ऋ' ७।४१।१), देवीरभिष्टये (ऋ' १०।८।४), प्रातर्मित्रावरुणा (ऋ' ७।४१।१), अश्वावतीर्गोमतीर्नः (ऋ' ७।४१।७)।

रिफितो विसर्जनीयो रेफोदयः सन् लुप्यते। यथा—'युवोः रजांसि' इत्यतः युवो रजांसि (ऋ' १।१८०।१)।

ह्रस्वपूर्व्वस्य रेफोदयस्य रेफपरस्य रिफितविसर्जनीयस्य लोपो भवति, उपधा च दीर्घा भवति। यथा—'प्रातः रत्नम्' इत्यतः 'प्राता रत्नम् (ऋ' १।१२५।१)।

उभाविमौ सन्धी अकामनियतौ वेदितव्यौ। पूर्वोऽकामः, द्वितीयो नियतः इत्यर्थः।

अघोषि रेफ्यरेफी चोष्मणां स्पर्श उत्तरे।
तत्सस्थानमनूष्मपरे तमेवोष्मणामूष्मणि ॥ १० ॥

अघोषे स्पर्शे उत्तरे परभूते सति रेफो अरेफो च विसर्जनीयः तस्य परभूतस्याघोषस्य समानस्थानमूष्माणमापद्यते, तस्मिन् परत्रावस्थिते शर्षं अनूष्मपरे सति। यथा—'ऋषिः को विप्रः,' इत्यत: ऋषिष्को विप्रः ( ऋ० ८।३।१४ ), 'देवाः चक्रम' इत्यत: देवाश्चक्रम (ऋ० १०।३७।१२ )।

अघोषे ऊष्मणि परत्रावस्थिते सति विसर्जनीयः तमेवोष्माणमापद्यते। यथा—यो वश्शिवतमो रसः ( ऋ० १०।९।२ ), देवीष् षल्॒-र्वीरुरु नः कृणोत ( ऋ० १०।१२८।५ ), ये नस्सपत्ना ( ऋ० १०।१२८।९ )।

प्रथमोत्तमवर्गीये स्पर्शे वोष्मणि चानते।
व्यापन्न ऊष्मसन्धिः स विक्रान्तः प्राकृतोपधः॥११॥

रेफो अरेफो च विसर्जनीयः प्रथमोत्तमवर्गीये स्पर्शे परे तत्समस्थानीयमूष्माणं विकल्पेनापद्यते। अनते मूर्द्धन्यभावमनापन्ने अघोषे ऊष्मणि च परभूते सत्यपि एवं विकल्पः स्यात्। यथा—यस्ककुभः, यः ककुभः ( ऋ० ८।४१।४ ), यः पञ्च ( ऋ० ७।१५।२ ), यो वश्शिवतमो रसः, यो वः शिवतमो रसः ( ऋ० १०।९।२ )।

स एष सन्धिः नाम्ना व्यापन्न ऊष्मसन्धिर्वेदितव्यः। अत्र ऊष्मणा विसर्जनीयो व्यापद्यते। विक्रान्तसन्धिस्तु प्राकृतोपधो वेदितव्यो यत्र विसर्जनीयः श्रूयते।

ऊष्मण्यघोषोदये लुप्यते पर
नतेऽपि सोऽन्वक्षरसन्धिवत्तु।
अव्यापत्तिः कखपफेषु वृत्तौ
रेफं स्वर्धूःपूरघोषिष्वविग्रहे ॥ १२ ॥

अघोषोदये नतेऽप्यनतेऽप्यूष्मणि परे विसर्जनीयो लुप्यते। यथा— 'समुद्रः स्थः' इत्यतः समुद्र स्थः ( ऋ॰ ६।६८।५ ), 'निः स्तनिहि' इतरतः निष्टनिहि ( ऋ॰ ६।४७।३० )।

स सन्धिरन्वक्षरवक्त्रसंज्ञो वेदितव्यः।

कखपफेषु परत्रावस्थितेषु अव्यापत्तिरेव अपरिवर्त्तनमेव विसर्जनीयस्य वृत्तिः व्यवहारः शाखाविशेषे इति शेषः। यथा—अगस्त्यः खनमानः ( ऋ॰ १।१७९।६ ), यः पञ्च चर्षणीरभि ( ऋ॰ ७।१५।२ ; ९।१०१।९ ), याः फलिनीः ( ऋ॰ १०।९७।१५ )।

अघोषेषु प्रत्ययेषु परेषु स्वः, धूः, पूः इत्येतेषां विसर्जनीयो रेफमापद्यते अविग्रहे अपृथक्पदे। यथा—स्वर्चनाः ( ऋ॰ ८।८४।५ ), न धूर्षदम् ( ऋ॰ १०।१३२।७ ), न पूर्पतिम् ( ऋ॰ १।१७३।१० ), अविग्रहे इति किम्—स्वः सनिष्यवः पृथक् ( ऋ॰ १।१३१।२ )।

नाच्छा इन्दुः स्वधितीवाह एव
भूम्याददेऽहोभिरुपर्वसूयवः।
आवर्त्तमोऽहोरात्राण्यदो पितो
प्रचेता राजन् वर्त्तनीरहेति च ॥१३॥

अच्छा इन्दुः ( ऋ॰ ८।९८।३ ), स्वधितीव ( ऋ॰ ५।७।८ ), अह एव ( ऋ॰ ६।४८।१७ ), भूम्याददे ( ऋ॰ ८।६१।१० ), अहोभिः ( ऋ॰ १०।१४।९ ), उपर्वसूयवः ( ऋ॰ १।४९।४ ), आवर्त्तमः ( ऋ॰ १।९२।४ ) अहोरात्राणि ( ऋ॰ १०।१९०।२ ), अदो पितो ( ऋ॰ १।१८७।७ ), प्रचेता राजन् ( ऋ॰ १।२४।१४ ), वर्त्तनीरह ( ऋ॰ १।१४०।९ ) इत्येतेषु विसर्जनीयस्य यथाप्राप्तं कार्य्यं न भवति। अत एतानि निपात्यन्ते।

यथादिष्टं नामिपूर्व्वः षकारं
सकारमन्योऽरिफितः ककारे ।
पकारे च प्रत्ययेऽन्तःपदं तु
सर्व्वत्रैवोपाचरितः स सन्धिः ॥ १४ ॥

यथादिष्टमापद्यते। वक्ष्यमाणे सन्धौ नामिपूर्वो विसर्जनीयः षकारमापद्यते। अन्यः अनामिपूर्वः अरिफितश्च विसर्जनीयः सकारमापद्यते ककारे पकारे च परतः। अन्तःपदं तु सर्वत्रैव एतदधिकृतं वेदितव्यम्। उपाचरितसंज्ञः स सन्धिर्वेदितव्यः। यथा—'स्थ निः कृतोः' इत्यत्र स्थ निष्कृतोः (ऋ १०।८७।८), 'शश्वतः कः' इत्यत्र शश्वतस्कः (ऋ १।७२।१)।

अन्तःपादं विग्रहेऽकारपूर्व्वः
पतिशब्दे द्व्यक्षरे पुंस्प्रवादे ।
करं कृतं कृधि करत् करित्यपि
परेषु पादान्तगते परीति च ॥ १५ ॥

अकारपूर्वो विसर्जनीयः सकारमापद्यते द्व्यक्षरे द्व्यक्षरविशिष्टे पुंस्प्रवादे पुमर्थवाचिनि पतिशब्दे परभूते सति विग्रहे अन्तःपादं च। यथा—वाचस्पतिम् (ऋ १०।८१।७)। अन्तःपादमिति किम्—तं जानतीः प्रत्युदायन्नुषासः पतिः (ऋ ३।३१।४)। पुंस्प्रवाद इति किम्—अतः पत्नी दंशस्यत (ऋ ५।५०।३)।

करं, कृतं, कृधि, करत्, कः एतेष्वपि परेषु अकारपूर्वो विसर्जनीयः सकारमापद्यते। यथा—सहसा सहस्करम् (ऋ १०।४८।८), मघवत्सु नस्कृतम् (ऋ १०।३८।२)।

पादान्तगते परीत्येतस्मिन् पदे परभूते सति अकारपूर्वो विसर्जनीयः सकारमापद्यते। यथा—तदुत्तानपदस्परि (ऋ॰ १०।७२।३)। पादान्तगते इति कस्मात्—यदोषधीभ्यः परि जायते विषम् (ऋ॰ ७।५०।३)। अकारपूर्व इति किम्—दक्षाद्दितिः परि (ऋ॰ १०।७२।४)।

असोऽन्तोऽरेफवतः पारशब्दे
　　परि कृतानि करतीति चैषु।
अपादान्तीयेष्वपि प्रत्ययेषु
　　वास्तोरित्येतत् पतिशब्द उत्तरे ॥ १६ ॥

अरेफवतो रेफरहितस्य अस् इति भागस्य योऽन्तः विसर्जनीयः स सकारमापद्यते पारशब्दे, परि, कृतानि, करति इत्येतेषु च अपादान्तीयेष्वपि परभूतेषु सत्सु। यथा—तमसस्पारमस्य (ऋ॰ १।९२।६), मनसस्परि ध्यया (ऋ॰ ४।३६।२), तवसस्कृतानि (ऋ॰ ७।६।१), सुपेशसस्करति (ऋ॰ २।३५।१)।

पतिशब्दे परभूते वास्तोरित्येतत्पदस्य विसर्जनीयः सकारमापद्यते यथा—वास्तोष्पते ध्रुवा स्थूणा (ऋ॰ ८।१७।१४)।

आविर्हविर्ज्योतिरित्युत्तरश्चेत्
　　ककारोऽथ पान्तपश्यन्तिशब्दौ।
इळाया गा नमसो देवयुर्द्वो
　　मातुरित्स्तानि पदप्रवादे ॥ १७ ॥

आविः, हविः, ज्योतिः—इत्येतेषां विसर्जनीयः षकारमापद्यते, यदि ककार उत्तरः स्यात्। यथा—आविष्कर्त्त महित्वना (ऋ॰

१।८६।८), हविष्कृणुध्वमागमत् (ऋ० ८।७२।१), ज्योतिष्कर्त्ता यदुश्मसि (ऋ० १।८६।१०)।

अपिच पान्त, पश्यन्ति—इतिअतो यदि उत्तरो भवतः, तर्हि एतेषामेव शब्दानां विसर्जनीयः षकारमापद्यते। यथा—हविष्पान्त-मजरम् (ऋ० १०।८८।१), ज्योतिष्पश्यन्ति वासरम् (ऋ० ८।६।३०)।

पदशब्दप्रवादे पदशब्दरूपभेदे परभूते इलायाः, गाः, नमसः देवयुः, द्रुहः, मातुः, इलः—इत्येतानि उपाचारं लभन्ते। यथा—इलायास्पदे सुदिनत्वे (ऋ० ३।२३।४) गास्पदेभ्योऽदात् (ऋ० ८।२।३८), जुजुषुर्नमसस्पदे (ऋ० ८।२३।८)।

पूर्व्वः पुरः पूरिति पूर्व्वपद्यान्
पदानि चापोद्य नवैतदेवम्।
अस्या यः सोमो ब्रहतोऽस्य पूर्व्वा
उरु ज्योतिर्जात इमो वृधोऽन्यः॥ १८॥

पूर्वः, पुरः, पूः—इत्येतान् पूर्वपद्यान् अपोद्य वर्जयित्वा अस्या यः, सोमः, ब्रहतः, अस्यपूर्व्यः, उरुज्योतिः, जातः, इमः, वृधः, अन्यः—इति नव च वर्जयित्वा एतदुपाचारप्रकरणं विहितम् इति प्रतिपत्तव्यम्। एतेषां विसर्जनीयाः सकारं नापद्यन्ते इत्यर्थः। यथा—पूर्वः पूर्वो यजमानो वनीयान् (ऋ० ५।७७।२), पुरः प्रस्रवणा बलिम् (ऋ० ८।१००।९), दीर्घायुरस्या यः पतिः (ऋ० १०।८५।३९), सोमः पतो रयीणाम् (ऋ० ९।१०१।६)

ब्रह्मणो ह वातऋतो विदुर्वसुः
पशुरेतानि कविशब्द उत्तरे।

**पथिशब्दे जिन्वथश्चेतथो मद्दः**

**पृथुशब्दे विष्वतो वीलितो रजः ॥ १९ ॥**

कविशब्दे परभूते ब्रह्मणः, जातवेदतः इत्येकत्र द्वयम्, विदुः, वसुः, पशुः इत्येतानि उपाचारं लभन्ते। यथा—रक्षा णो ब्रह्मणस्कवे (ऋ ६।१६।३०), अग्ने जातवेदतस्कविः (ऋ ८।६०।५)।

जिन्वथः, चेतथः, मद्दः इत्येतानि पदानि उपाचारं लभन्ते पथिशब्दे परभूते। यथा—मधुना जिन्वथस्पथः (ऋ ४।४५।३), स्वधया चेतथस्पथः (ऋ ४।४५।६)।

पृथुशब्दे परभूते विष्वतः, वीलितः, रजः इत्येतेषां पदानां विसर्जनीयः सकारमापद्यते। यथा—गिरिर्न विष्वतस्पृथुः (ऋ ८।८८।४), अथर्वा वीलितस्पृथुः (ऋ २।२१।४), वि द्यामेषि रजस्पृथु (ऋ १।५०।७)।

**कामपोषपूर्धिशब्देषु रायः**

**पादादिरन्तश्च दिवस्परीति च।**

**दिवस्पृथिव्या अधमस्पदीष्ट**

**पूर्वं पादादौ यदि सस्पदीष्ट ॥ २० ॥**

कामपोषपूर्धिशब्देषु परभूतेषु 'रायः' इत्येतस्य विसर्जनीयः सकारमापद्यते। यथा—रायस्कामो वज्रहस्तम् (ऋ ७।३२।३), रायस्पोषं यजमानेषु धारय (ऋ ८।५९।७), रायस्पूर्धि स्वधावोऽस्ति (ऋ १।३६।१२)।

दिवस्परीत्येतद् निपात्यते पादादौ पादान्ते च वर्त्तमानम्। यथा—'दिवस्परि प्रथमम्' (ऋ १०।४५।१), 'अयं स यो दिवस्परि' (ऋ ९।३९।४), पादादिरन्तश्चेति किं—'वृष्टिं दिवः परिस्रव' (ऋ (९।८।८; ९।३९।२)।

'दिवस्पृथिव्याः' 'अधमस्पदोष्ट' इत्येतद्द्वयं निपात्यते। एतद्द्वयमध्ये पूर्वं 'दिवस्पृथिव्याः इत्येतत् पादादौ वर्त्तमानमेव निपात्यते। यथा—'दिवस्पृथिव्याः पर्य्योज उद्भृतम्' (ऋ॰ ६।४७।२७), विश्वस्य जन्तोरधमस्पदोष्ट (ऋ॰ ७।१०४।१६), पूर्वं पादादाविति किं—'प्र ये दिवः पृथिव्या न बर्हणा' (ऋ॰ १०।७७।३)।

'सः पदोष्ट' इत्यतः सस्पदोष्ट (ऋ॰ ३।५३।२१), इत्येतत् निपात्यते।

शवसो महो सहस इळाया
पात्वित्येकं पुत्रशब्दे पराणि।
रायस्वां महस्करथो महस्पर'
निष्क्रव्याद' निष्कृथ निष्पिपर्त्त न॥ २१॥

शवसः, महः, सहसः, इळायाः—इत्येतेषाम् एकं शवसः इति यावत् 'पातु' इति शब्दे परभूते उपाचरति। पराणि महः, सहसः, इळायाः—इत्येतानि च पुत्रशब्दे परभूते उपाचरन्ति। यथा—'शवसस्पातु' (ऋ॰ ५।१५।५), महस्पुत्रासः (ऋ॰ १०।१०।२), सहसस्पुत्रः (ऋ॰ २।७।६), इळायास्पुत्रः (ऋ॰ ३।२९।३)।

रायस्वां (ऋ॰ ६।३६।४), महस्करथः (ऋ॰ ६।५०।१), महस्परं (ऋ॰ १।१६१।६), निष्क्रव्याद' (ऋ॰ १०।१६२।२), निष्कृथ (ऋ॰ १०।८७।८), निष्पिपर्त्तन (ऋ॰ १।१०६।१) इत्येतानि निपात्यन्ते।

कवन्ध' पृथु कण्वासः पुत्रः पातु पथा पयः।
पायुः पृष्ठ' पद' तेषां प्रवादा उदये दिवः॥२२॥

कवन्ध', पृथ, कण्वासः, पुत्रः, पातु, पथा, पयः, पायुः, पृष्ठ', पदम्—इत्येतेषां पदानां प्रवादा रूपभेदा उदये परतावस्थिताः दिव

इत्येतस्य उपाचारं जनयन्ति। यथा—दिवस्कवन्धम् (ऋ° ८।७४।७), दिवस्पृथु: (ऋ° १।४६।८), दिवस्कण्वास: (ऋ° १।४६।६), दिवस्पुत्रा: (ऋ° ४।२।१५)।

**रजस्पात्यन्तस्पथा: कस्काव्या चतुरस्कर:।**
**स्वादुष्किल निदस्पातु द्यौष्पितर्वसतिष्कृता ॥२३॥**

रजसस्पाति (ऋ° ५।४७।३), अन्तस्पथा: (ऋ° ५।५२।१०), कस्काव्या (ऋ° ५।५८।३), चतुरस्कर: (४।३३।५), स्वादुष्किल (ऋ° ६।४७।१), निदस्पातु (ऋ° ६।६१।११), द्यौष्पित: (ऋ° ६।५१।५), वसतिष्कृता (ऋ° १०।८७।५)—एतानि यथागृहीतं निपात्यन्ते।

**तपोष्पवित्रं त्रिष्पूत्वी धीष्पीपाय विभिष्पतात्।**
**द्यौष्पिता रजसस्पृष्टो ददुष्पज्राय नस्कर: ॥ २४ ॥**

तपोष्पवित्रं (ऋ° ८।३।२), त्रिष्पूत्वी (ऋ° ८।८१।७), धीष्पीपाय (ऋ° २।२।८), विभिष्पतात् (ऋ° १।४६।३), द्यौष्पिता (ऋ° ४।१।१०), रजसस्पृष्ट: (ऋ° ३।४८।४), ददुष्पज्राय: (ऋ° ८।६।४७), नस्कर: (ऋ° ८।८४।६)—इत्येतानि पदानि निपात्यन्ते।

**वसुष्कृविन्मनुष्पिता पितुष्पिता पितुष्परि।**
**प्र गास्पुरो मयस्करन्नभस्पयस्त्वय: पर: ॥ २५ ॥**

वसुष्कृवित् (ऋ° १।१४३।६), मनुष्पिता (ऋ° १८०।१६), पितुष्पिता (ऋ° ६।१६।३५), पितुष्परि (ऋ° ८।६।१०), प्र गास्पुर: (ऋ° १।४२।१), मयस्करन् (ऋ° १०।८५।१), नभस्पय: (ऋ° ८।७१।१), त्वयस्पर: (ऋ° ८।२८।१)—इत्येतानि निपात्यन्ते।

नकार आकारोपधः पद्यान्तोऽपि स्वरोदयः ।
लुप्यतेऽजाञ् जग्रसानाञ् जघन्वान् देवहूतमान् ॥२६॥

बद्धधानाँ इन्द्रसोमांस्तृषाणान्नोदेवदेवान् ।
हन्त देवाँ इति चैता आन् पदाः पदवृत्तयः ॥ २७ ॥

आकारोपधो नकारः पद्यान्तोऽपद्यान्तो वा स्वरोदयः स्वरपरः सन् लुप्यते। यथा—स्वर्गाँ इव सृजतम् ( ऋ॰ ८।३५।२० ), महाँ इन्द्रो नृवदा ( ऋ॰ ६।१९।१ )। आकारोपध इति किम्—केतुं कृण्वन्नकेतवे ( ऋ॰ १।६।३ )।

पादान्ते अजान्, जग्रसानान्, जघन्वान्, देवहूतमान्, बद्धधानान्, इन्द्रसोमान्, तृषाणान्, नो देव देवान्, हन्त देवान्—एतेषु पदेषु नकारा लुप्यन्ते। यथा—आ सूर्यो बृहतस्तिष्ठदज्राँ ( ऋ॰ ४।१।१७ ), युक्ष्वा हि देवहूतमाँ ( ऋ॰ ८।७५।१ )।

एता नकार आकारोपध इत्यादिका आन्पदाः पदवृत्तय उच्यन्ते।

विवृत्त्यभिप्रायेषु च पीवो अन्नाँ रयिवृधः ।
दधन्वाँ यो जुजुर्वाँ यः स्ववाँ यातु ददाँ वेति ॥२८॥

विवृत्त्यभिप्रायेषु सन्धिषु अन्तःस्थाव्यञ्जनोदयेषु इति यावत् आकारोपधो नकारो लुप्यते। यथा—पीवो अन्नाँ रयिवृधः ( ऋ॰ ७।९१।३ ), दधन्वाँ यः ( ऋ॰ ९।१०७।१ ), जुजुर्वाँ यः ( ऋ॰ २।४।५ ), स्ववाँ यातु ( ऋ॰ १।११८।१ ), ददाँ वा ( ऋ॰ १०।१३२।४ )।

इतं योनौ वचोभिर्यान् युवनूँरवं निषीष्टेति ।
ईकारोकारोपहितो रेफमेषु स्वरेषु च ॥ २९ ॥

हत', योनौ, वचोभिः, यान्, युवन्यून्, वनिषीष्ट—इत्येतेषु पदेषु परभूतेषु स्वरेषु च परभूतेषु ईकारोपहितः ऊकारोपहितश्च नकारो रेफमापद्यते। यथा—'उत्पणीन् हतम्' इत्यतः उत्पणीँ हतम् ( ऋ' १।१८४।२ ), वि दस्यूँ र्योनौ ( ऋ' १।६३।४ ), युवनूँ रुदश्याः ( ऋ' ५।१२।१५ )।

दस्यूँरेको नृँरभि च ते स्पर्शरेफसन्धयः।
नास्मानुपैतावान् स्फुरान्-गच्छान्-देवानयाड्वहान्॥३०
हिरण्यचक्रान् मायावान् घोषांस्तानश्विना विद्वान्।
पयस्वान् पुत्वानाधेह्यायजीयान् पतीनुरोः॥ ३१ ॥

दस्यूँरेकः ( ऋ' ६।१८।३ ), नृँरभि ( ऋ' ५।५४।१५ ) इत्येतयोर्नकारो रेफमापद्यते।

ते एते 'हत' योनौ' (४।२८) इत्यारभ्य स्पर्शरेफसन्धयो वेदितव्याः।

एतावान्, स्फुरान्, गच्छान्, वहान्, हिरण्यचक्रान्, मायावान्, घोषान्, तानश्विना, अविद्वान्, पयस्वान्, आयजीयान् इत्यादीनां नकाराः प्रकृत्या भवन्ति—अस्मानुप, देवानयाट्, पुत्वानाधेहि, पतीनुरोः इत्यादिषु च नकाराः प्रकृत्या भवन्ति। यथा—एतावानस्य महिमा ( ऋ' १०।९०।३ ), यद्गावः स्फुरान्टजिप्यम् ( ऋ' ६।६७।११ )।

चरति चक्रे चमसांश्च चो चिच्
चरसि च्यौतश्चतुरश्चिकित्वान्।
एतेषु सर्व्वत्र विसर्जनीयवद्
दीर्घोपधोऽस्माञ्चमसान् पशून्न॥ ३२ ॥

चरति, चक्रे, चमसान्, च, चो, चित्, चरसि, च्यौत्नः, चतुरः, चिकित्वान्, एतेषु पदेषु परतः अन्तःपादं पादान्ते च वर्त्तमानो दीर्घोपधो नकारो विसर्जनीयवत् प्रत्येतव्यः—विसर्जनीयकार्य्याणि लभते नकार इत्यर्थः। 'अघोषे रेफ्यरेफो' (४।१०) इत्यादिना चोक्तानि विसर्जनीयकार्य्याणि। यथा—महांश्चरति (ऋ॰ ३।५५।८), तांश्चक्रे (ऋ॰ १०।८०।८), विभ्राजमानांश्चमसान् (ऋ॰ ४।३३।६)।

अस्मान्, चमसान्, पशून् इत्यादिषु नकाराः विसर्जनीयवत् कार्य्यं न लभन्ते इत्यर्थः। यथा—अस्माञ्च तांश्च प्र हि नेषि वस्य (ऋ॰ २।१।१६)।

**तांस्ते सर्वांस्तान् देवांस्त्वं तांस्त्रायस्वावदंस्त्वं च।**
**विसर्जनीयं परेष्विति ते स्पर्शोष्मसन्धयः॥ ३३ ॥**

तांस्ते (ऋ॰ ८।८१।५), सर्वांस्तान् (ऋ॰ ८।८३।६), देवांस्त्वम् (ऋ॰ ५।१३।६), तांस्त्रायस्व (ऋ॰ ७।१६।८), आवदंस्त्वम् (ऋ॰ २।४३।३)—इत्यादिषु नकारो विजर्सनीयवत् कार्य्यं लभते।

येषु परेषु सन्धिषु विसर्जनीयं वयं वक्ष्यामः, ये च 'चरति चक्रे' (४ ३२) इत्यादयस्ते उभयेऽपि स्पर्शोष्मसन्धयो वेदितव्याः। एकत्र स्पर्श एकत्रोष्मा इत्यन्वर्थसंज्ञा।

**नॄँः पतिभ्यो नॄँः प्रणेत्रं नॄँः पात्रं स्वतवाँः पायुः।**
**सन्धिर्विक्रान्त एवैष नॄँः पाहि शृणुधीति च ॥३४॥**

नॄँः पतिभ्यः (प्रैषिके), नॄँः प्रणेत्रम् (प्रैषिके), नॄँः पात्रम् (ऋ॰ १।१२१।१), स्वतवाँः पायुः (ऋ॰ ४।२।६), नॄँः पाहि शृणुधि (ऋ॰ ८।८४।३) इत्येतेषु सर्वेषु विक्रान्तसन्धिः।

**नकारस्य लोपरेफोष्मभावे**
**पूर्व्वस्तत्स्थानादनुनासिकः स्वरः।**

आदिस्वरश्चोत्तरेषां पदेऽपि
मांस्पचन्या मांश्चत्वे मंश्चतोश्च ॥ ३५ ॥

यत्र यत्र नकारस्य लोपभावो रेफभाव ऊष्मभावश्च उक्तः तत्र तत्र नकारस्थानात् पूर्वम् अनुनासिकः स्वरो वेदितव्यः इत्यर्थः।

उत्तरेषां पदानां—माँस्पचन्या (ऋ॰ १।१६२।१३), माँश्चत्वे (ऋ॰ ८।८७।५४), मँश्चतोश्च (ऋ॰ ७।४४।३) इतिप्रतिषाम् इति यावत् आदिस्वरोऽनुनासिको वेदितव्यः पदेऽपि पदपाठेऽपि।

ईमितान्तलोप एषूदयेषु
गर्भं गावो वत्सं मृजन्ति पृच्यते।
सखायो विव्याच पुना रिणन्ति
रथमित्यन्वक्षरसन्धिरेव सः ॥ ३६ ॥

गर्भं, गावः, वत्सं, मृजन्ति, पृचयते, सखायः, विव्याच, पुनः, रिणन्ति, रथम् इत्येतेषु उदयेषु परभूतेषु सत्सु 'ईम्' इत्यस्य पदस्य अन्तलोपो भवति। सोऽयमन्वक्षरसन्धिरेव वेदितव्यः। यथा—यम् ई गर्भम् (ऋ॰ ८।१०२।६), सम् ई गावः (ऋ॰ ८।७२।६), तम् ई मृजन्ति (ऋ॰ ८।६३।१७)

पुरुपृथ्वधिपूर्व्वेषु शकार उपजायते।
ह्रस्वे च पूर्व्वपद्यान्ते चन्द्रशब्दे परेऽन्तरा ॥३७॥

पुरु, पृथु, अधि—इत्येतेषु पूर्व्वपदेषु सत्सु चन्द्रशब्दे परे ह्रस्वे च पूर्वपद्यस्य अन्ते सति अन्तरा शकारागमः स्यात्। यथा— पुरुश्चन्द्रं विविद्वान् (ऋ॰ ३।३१।१५), पृथुश्चन्द्रमवसे (ऋ॰ ४।२।१३), अधिश्चन्द्रं बृहत् पृथु (ऋ॰ ८।६५।११)।

5439



परीति पद्ये कृपरे षकारो
वनेति रेफः सदशब्द उत्तरे ।
परिष्कृण्वन्ति वेधसोऽस्कृतोषसं
शौद्धाचराः सन्धय एत उक्ताः ॥ ३८ ॥

परीत्येतस्मिन् पूर्वपदे कृधातुपरे सति अन्तरा षकारागम उपजायते । यथा—परिष्कृण्वन्' ( ऋ० ८।३९।२ ) ।

सदशब्दे उत्तरे परभूते सति वन इत्येतस्मिन् च पूर्वपद्ये अन्तरा रेफो जायते । यथा—'वनर्षदम् ( ऋ० १०।१३२।७ ) ।

'परिष्कृण्वन्ति' ( ऋ० ८।६४।२३ ) इत्यत्र षकारागमो निपात्यते । 'अस्कृतोषसम्' ( ऋ० १०।१२७।३ ) इत्यत्र सकारागमो निपात्यते । य एते पुरुपृथ्वादयः ( ४।३७–३८ ) सन्धय उक्तास्ते शौद्धाचरसंज्ञा वेदितव्याः ।

मेधातिथौ वरुणान्तव्रतान्तौ
स्पर्शान्तःस्थाप्रत्ययौ निङ्क्सेति ।
आदित्या देवा वरुणासुरेति
येतादिषु वयमितात्र मित्राः ॥ ३९ ॥

'अग्निं दूतं वृणीमहे' ( ऋ० १।१२ ) इत्यारभ्य 'कस्य नूनम् कतमस्यामृतानाम् ( ऋ० १।२४ ) इति यावत् मन्त्रा मेधातिथिदृष्टाः । तेषु मेधातिथिदृष्टेषु मन्त्रेषु वरुणशब्दान्तो व्रतशब्दान्तश्च इत्येवंरूपौ समासौ निङ्क्सेति ह्रस्वौ भवतः स्पर्शवर्णेषु अन्तःस्थवर्णेषु च परभूतेषु सत्सु । यथा—'इन्द्रावरुण नू नु वाम्' (ऋ० १।१७।८), मित्रावरुण दूळभम् ( ऋ० १।१५।६ ), मेधातिथाविति किम्—'इन्द्रावरुणा

मदे अस्य ( ७।८२।२ )। स्पर्शान्तःस्थाप्रत्यये इति किम्—'ता मित्रा-वरुणा हुवे' ( ऋ' १।२३।५ )।

आदित्या, देवा, वरुणा, असुरा एतानि पदानि ह्रस्वानि भवन्ति 'या' इत्यादिषु परश्लोकोक्तेषु या, सुप्रतीकं, निष्कृतं पुरोहितः, चक्रं, दाशति, शवसा, भिषज्यथः—इत्येतेषु इति यावत् परभूतेषु। यथा—आदित्य शवसा ( ऋ' ७।८५।४ ), 'वरुण दाशति' ( ऋ' ६।६८।५ ), 'असुर या' ( ऋ' १।१५१।४ )।

वयमित्येतस्मिन् पदे परभूते मित्रा इत्येतत् पदं ह्रस्वं भवति। यथा—'मित्र वयं च सूरयः' ( ऋ' ५।६६।६ )।

या सुप्रतीकं निष्कृतं पुरोहितिः
चक्रं दाशति शवसा भिषज्यथः।
सो चिन्नगस्त्ये दशमे च मण्डले
सान्वीयते सः पलिक्नीर्हि षस्तव ॥ ४० ॥

अगस्त्ये अगस्त्यऋषिदृष्टमन्त्रे ( ऋ' १।१६६।६ इत्यतः प्रथम-मण्डलान्तं यावत् ) दशमे मण्डले च 'सो चिन्नु' इत्येतस्मिन् विसर्जनीयस्य ओत्वं निपात्यते। 'सो चिन्नु नमरातिनो वयम्' ( ऋ' १।१८१।१० ) 'सो चिन्नु सख्या' ( ऋ' १०।५०।२ )। अगस्तेर दशमे च मण्डले इति किम्—'स चिन्नुमां' ( ऋ' १।६८।४ )।

'सान्वीयते' ( ऋ' १।१४५।१ ) इत्यत्र विसर्जनीयस्य आत्वं निपात्यते।

'सः पलीक्नीः' ( ऋ' ५।२।४ ) इत्यत्र विसर्जनीयस्य अलोपो निपातितः।

'हि षस्तव' (ऋ' ८।३३।१६) इत्यत्र विसर्जनीयस्यालोपो निपात्यते।

जुगुक्षतो दुदुक्षन् गा अदुक्षत्
दुक्षन् वृधेऽस्य दुक्षतानु दक्षि ।
दक्षन्न पत्मन् दक्षुषोऽभि दक्षत्
कृष्णासो दक्षि ह्रियानस्य दक्षोः ॥ ४१ ॥

जुगुक्षतो ( ऋ॰ ८।३१।७ ), दुदुक्षन् (ऋ॰ १०।७४।४), गा अदुक्षत् ( ऋ॰ १।३३।१० ), दुक्षन् वृधे ( ऋ॰ १।१२१।८ ) अस्यदुक्षत ( ऋ॰ १।१६०।३ ), अनुदक्षि ( ऋ॰ २।१।१० ), दक्षन्न ( ऋ॰ १।१३०।४ ), पत्मन्दक्षुषः ( ऋ॰ १।१४१।७ ), अभिदक्षत् ( ऋ॰ २।४।७ ), कृष्णासो दक्षि ( ऋ॰ १।१४१।८ ), ह्रियानस्य दक्षोः ( ऋ॰ २।४।४ ) इत्येतानि निपात्यन्ते। निपाताभावे तु जुघुक्षतः, दुधुक्षन्, गा अधुक्षन्, धुक्षन् वृधे इत्येवं रूपाणि स्युः।

## पञ्चमं पटलम्

अन्तःपादं नाम्युपधः सकारः
षकारमप्राप्नपरैर्यथोक्तम् ।
अन्यै रेकारान्नतिरत्र पूर्वा
ततो व्यापत्तिर्भवतीति विद्यात् ॥ १ ॥

अन्तःपादं पादस्य मध्ये नामिनो यस्योपधाभूताः स तथोक्तः सकारः षकारमापद्यते इत्यर्थः। ऊष्मपरैर्नामिभिरुपहितोऽपि,

अनूष्मपरैरपि इत्यपिशब्दार्थः। यथा—यच्च गोषु दुःष्वप्न्यम् (ऋ० ८।४७।१४)। अन्तःपादमिति किम्—तदग्निस्तत् (ऋ० १।१०७।२)।

एकारात् अन्यैर्नामिभिरुपहितः सकारः षकारमापद्यते। नामिनाप्येकारेणोपहितः सकारः षकारो न भवति इत्यर्थः। यथा—ये स्था मनोर्यज्ञियाः (ऋ० १०।३६।१०)।

व्यापत्तिः नतिश्च इत्युभयोरेकत्र प्राप्तौ आदौ नतिः परतश्च व्यापत्तिः प्रवर्त्तेत इति विजानीयात्। यदि हि व्यापत्तिः पूर्वं क्रियेत पश्चान्नतिस्तदा तमेवोष्माणमूष्मणि (४।१०) इति सकारो नम्यस्य सकारस्य व्यवधायकः स्यात् न च तदा प्रवर्त्तेत नतिः।

सूतो नकिः स्वैर्व्युरु नह्यभितो
नि हीति स ह्यक्षरेणैव सत्स्थः।
स्वबह्वक्षरेण पदादयश्च
स्यिति स्किति स्नितारे फस्य च स्मिति ॥२॥

सु, ऊतो, नकिः, स्वैः, वि, उरु, नहि, अभितो, नि, हि, इत्येतैर्नामिभिरुपहितः सकारः षकारमापद्यत इत्यर्थः। यथा—प्र सु षविभ्यः (ऋ० ४।२६।४), ऊतो ष ब्रहतो दिवः (ऋ० ६।२।४)।

ह्यक्षरेणैव पदेन नाम्यन्तेनोपहितः "सत्, स्थः" इत्येतयोः सकारः षकारमापद्यते। यथा—दिविषद् भूम्याददे (ऋ० ८।६१।१०), दिवि ष्ठो यत् पृथिव्याम् (ऋ० १।१०८।११), ह्यक्षरेणैवेति किम्—युवं हि स्थः (ऋ० ८।१८।२)।

सु इत्येतत्पदगतः सकारः षकारमापद्यते अबह्वक्षरेण नामिना उपहितः चेत्। यथा—मो ष्वद्य दुर्हणावान् (ऋ० ८।२।२०)। अबह्वक्षरेणेति किम्—सुदीतिभिः सु दीदिहि (ऋ० ६।४८।३)।

पदानामादिभूतः सकारः षकारमापद्यते यकार-ककार-नकार-पराः सन्तः। अबह्वचरेणेत्येव। यथा—गोभिः ष्याम (ऋ० ५।२०।४), यजु ष्कन्नम् (ऋ० १०।१८१।३), अधि ष्णुना (ऋ० ८।८७।१६)। अबह्वचरेणेति किम्—स्कम्भथुः स्कम्भनेन (ऋ० ६।७२।२)।

अरेफस्य च पदस्य आदिभूतः 'स्म' इति नम्यते। अबह्वचरेणेत्येव। यथा—न हि ष्मा ते (ऋ० ४।३१।८)। अरेफस्येति किम्—प्रति स्मरेथान्तु (ऋ० ७।१०४।७)। अबह्वचरेणेति किम्—वहामि स्म पूषणम् (ऋ० १०।३३।१)।

**एकारेणापि ष्विति नः परं चेद्**
**दीर्घो न स्यित्यु च नास्पर्शपूर्व्वम्।**
**तकारवर्गस्तु टकारवर्गम्**
**अन्तःपदस्थोऽपि षकारपूर्व्वः॥ ३॥**

एकारान्तेनापि नामिना उपहितं सु इत्येतत् पदं नम्यते, नः इति पदं परश्चेद् भवति। यथा—तेषु णो मरुतः (ऋ० १।१६८।५)।

दीर्घो नामी उपधाभूतोऽपि 'स्य' इति पदादिं न नमयति। यथा—वीरैः स्याम सधमादः (ऋ० ५।२०।४)।

'उ' इत्येतत् पदं 'स्य' इति पदादिं न नमयति, यदि तत् 'उ' इति स्पर्शपूर्वं न भवति। यथा—एष उ स्य पुरुव्रत (ऋ० ८।३।१०)। स्पर्शपूर्वत्वे तु—उदु ष्य शरणे दिवः (ऋ० ८।२५।१८)।

षकारे पूर्वस्मिन् सति अन्तःपदस्थोऽपि नानापदस्थोऽपि च तकारवर्गस्तु पुनष्टकारवर्गम् आपद्यते यथासङ्ख्यम्। यथा—निष्ठितो मध्ये अर्णमः (ऋ० १।१८२।७)।

सितां सधस्थात् स्तनिहि स्तवास
स्तवे स्तुवन्ति स्तुहि सोम स्तुतः स्थ।
साहि स्तः स्तुप सत्सि सत्सत्स्वनीति
स्तोभेत्यादिश्चापि बह्वक्षरान्तैः ॥ ४ ॥

बह्वक्षरान्त्यैरबह्वक्षरान्त्यैश्च नामिभिरुपहितः सितां, सधस्तात्, स्तनिहि, स्तवास, स्तवे, स्तुवन्ति, स्तुहि, सोम्, स्तुतः, स्थ, साहि, स्तः, स्तुप, सत्सि, सत्सत्, स्वनि इत्येतेषां पदानाम् आदिः, स्तोभेत्येतस्य च पदस्य सप्रवादस्यादि नम्यते। यथा—यदि षितामसुञ्चता (ऋ० ४।१२।६), धमथो निः षधस्थात् ( ऋ० ५।३१।८ )।

निपरीति स्वसीत्यादी चकारवर्गीयोदयौ।
दकारे चोत्तरे परान् सिससीति स्वरोदये ॥ ५ ॥

नि परि इत्येतौ नामिनौ 'स्व' 'सि' इत्यम्भूता पदादो नमतः, यदि तौ पदादौ चकारवर्गीयवर्णपरौ स्याताम्। यथा—उदचा नि षिञ्च ( ऋ० ५।८३।८ ), परि षिचयते हरिः ( ऋ० ८।८६।३ ), परिष्वजन्ते जनयः ( ऋ० १०।४३।१ ), चकारवर्गीयोदयाविति किम्—व्यच्छन्तो परिस्वसुः ( ऋ० ४।५२।२ )।

स्वरोदये स्वरः उदयः परभूतो यस्मात् एवंविधे दकारे उत्तरे परभूते सति नि परि इत्येतौ नामिनो परान् 'सि' 'स' 'सी' इत्येतान् पदादीन् नमतः। यथा—परि यज्ञं निषेदथुः ( ऋ० ४।५६।७ ), निषदा पीतये मधु ( ऋ० ८।९७।८ ), निषीद होत्रम् ( ऋ० १०।९८।४ )। स्वरोदय इति किम् परिसद्यो अन्तान् ( ऋ० ५।४७।४ )।

सेध स्थापय सस्वजे सस्वजाते ससाद च।
सन्तं सन्तः सन्तिपूर्वीः स्थुः स्थाः स्थादिति चोत्तरः॥६॥

सेध, स्वापय, सम्वजे, स्वस्वजाते, ससाद, एतेषां पदानामादीन् 'नि' 'परि' इत्येतौ नमयतः। यथा—वाचस्पते निषेधेमान् ( ऋ० १०।१६६।३ ), निष्वापया मिथूदृशा ( ऋ० १।२९।३ )।

उत्तरो नामो 'परि' इति यावत् सन्त, सन्तः, सन्तिपूर्वाः, स्थः, स्थाः, स्थात्, इत्येतेषां पदानामादिभूतान् सकारान् नमयति। यथा—परिषन्तं न ( ऋ० १।७२।२ ), परिषन्ता वरन्तः ( ऋ० ३।३२।१६ ), त्रिभ्रवत: परिषन्तिपूर्वाः ( ऋ० ८।८८।५ )।

हि षिञ्च तू षिञ्च रजःसुषोदन्
निर्तोषिञ्चताभि षतः किमु ष्वित्।
सूरिभिः ष्याम दिवि षन्तु के ष्ठ
प्रति ष्फु र त्वो षधस्था कमु ष्वित् ॥ ७ ॥

हि षिञ्च (ऋ० ८।३२।२४) (ऋ० १०।१०१।१०), तू षिञ्च, रजःसुषोदन्, द्वतोषिञ्चत ( ऋ० ८।१०७।१ ), अभिषतः, किमुष्वित्, सूरिभिःष्याम ( ऋ० ७।८२।४ ), दिविषन्तु, केष्ठ, प्रतिष्फुर, त्वोषधस्था, कमुष्वित्—एतानि यथागृहीतं निपात्यन्ते। एतेषु षत्वं निपात्यते इत्यर्थः।

उ षुवाणो दिवि षन् सूरिभिः ष्याम्
ऋच्छन्ति ष्म नू ष्ठिरं वंसु षोदति।
नु ष प्र हि ष्ठो यशसा मही षा
वि षा भूयामो षु यति ष्ठने ति ॥ ८ ॥

उ षुवाणः ( ऋ० ८।१०७।८ ), दिवि षण् ( ऋ० ६।२।६ ), सूरिभिः ष्याम् ( ऋ० ६।६३।११ ), ऋच्छन्ति ष्म ( ऋ० १०।१०२।६ ), नू ष्ठिरं, वंसु षोदति, नु ष प्र, हि ष्ठो यशसा ( ऋ० १०।१०६।२ ), मही षा,

वि षा, भूयामो षु ( ऋ' ४।३२।६ ), यति ष्ठन ( ऋ' १०।६३।६ )—इत्येतानि यथागृहीतमेव भवन्ति। एतेषु षत्वं निपात्यते इति भावः।

**वाजो स्तुतो वहन्ति सीं पतिः स्यां दित्ससि स्तुतः।**
**अपो सु म्यक्ष सुधि सु त्रिः स्म स्तुहि स्तुहीति च ॥९॥**

वाजो स्तुतः ( ऋ' ६।२४।२ ), वहन्ति सीं ( ऋ' ६।२४।२ ), पतिः स्याम् ( ऋ' १।११६।२५ ), दित्ससि स्तुतः ( ऋ' ८।१४।४), अपोसुम्यक्ष ( ऋ' २।२८।६ ), सुधिसु, त्रिःस्म, स्तुहि स्तुहि ( ऋ' ८।१।३०), इत्येतेषु पदेषु यथाप्राप्तं षत्वं प्रतिषिध्यते।

**युग्मान्तःस्थादन्तमूलीयपूर्व्वैर्**
**अन्तःपदं नम्यतेऽन्तःपदस्थैः।**
**अन्यपूर्व्वैरपि पद्यादिभाक् सन्**
**एकाररेफपृतनोपधश्च ॥ १० ॥**

अन्तःपदस्थैः एकस्मिन्नेव पदे वर्त्तमानैः युग्मान्तःस्थापूर्व्वै रेफवकारपूर्वैरिति यावत् दन्तमूलीयपूर्व्वैश्च नामिभिरुपहितः सकारः षकारमापद्यते अन्तःपदम् एकस्मिन्नेव पदे। यथा—त्वैष्टुभाद्वा त्वैष्टुभन्निरतक्षत (ऋ' १।१६४।२३), विषितस्तुका रोदसी (ऋ' १।१६७।५), सुषाव सोमम् ( ऋ' ८।१०७।१ ), दुष्टरस्तरन्नरातीः ( ऋ' ३।२४।१ )।

अन्यपूर्व्वैरपि नामिभिरुपहितः सकारः षकारम् आपद्यते स सकारः पद्यादिं भजते यदि। युग्मान्तःस्थादन्तमूलीयपूर्व्वैरपीत्यपि-शब्दार्थः। यथा—चमूषच्छ्येनः ( ऋ' ८।८६।१९ )।

एकारोपधः रेफोपधः पृतनेतिशब्दोपधश्च पद्यादिभूतः सकारः

ारमापद्यते। यथा—धियो रथिष्ठामजरं नवीय: ( ऋं ६।२२।१ ), ामिष्पां वृजनस्य (ऋं १।८१।२१), पृतनाषाह्याय च (ऋं ३।३७।१)।

**रेफर्कारर्कारपर: प्रकृत्या**

**संस्रक् स्वर्सस्वरिति चाक्षराणाम् ।**

**सेति चास्य परिपन्नोपधा चेत्**

**संयोगस्य चाप्यनुनासिकादे: ॥ ११ ॥**

रेफपर: ऋकारपर ॠकारपरस्य सकार: प्रकृत्या भवति षत्वं पद्यते इत्यर्थ:। यथा—पुनाति ते परिस्रुतम् ( ऋं ८।१।६ ), ावि विसृष्टा: ( ऋं ८।१००।१२ ), तिसॄणां सप्ततीनाम् ( ऋं १८।३७ )।

सम्, स्रृक्, स्व्, सर्, स्वर्—इत्येतेषां शब्दानां पद्यादौ अपद्यादौ सतां सकारा: प्रकृत्या भवन्ति। यथा—सुसमिद्धो न आवह ( ऋं १३।१ )

स इतीत्थम्भूतस्य चाक्षरस्यादि: सकार: प्रकृत्या भवति, यदि ःक्षरं सकाराद्यनुस्वारस्य उपधाभूतं स्यात्। यथा—सु सं सन्मित: ऋं ७।८।३ )। परिपन्नोपधा चेदिति किम्—नि षदा पीतये मधु ऋं ८८७८ )।

अनुनासिको वर्णं आदिभूतो यस्य तादृगस्य संयोगस्य य: सकार-वर्णोऽक्षरविशेष उपधाभूत: स प्रकृत्या भवति। यथा—सु सन्दृशम् ७।१०।३ )।

**सहस्रं सनिता स्याचां सावित्रं सूवरी स्नुषे।**

**समुद्रं सदृशा सारे सायक: साधनी सह ॥१२॥**

सनितः स्पष्टः सदृशः सखाय

सप्नैरेते सानुशब्दश्च पद्याः ।

सुते सोमे वक्षणेऽप्रामि चर्षणि

स्वभिष्टीतीत्र वसुपधाश्च सर्व्वे ॥ १३ ॥

सहस्र, सनिता, स्थाताम्, सावित्रम्, सूवरो, स्नुषे, समुद्रम्, सदृशा, सारि, सायकः, साधनो, सह, सनितः, स्पष्टः, सदृशः, सखायम्, सप्नैः—एते पद्याः सानुशब्दश्च सप्रवादः इत्येते प्रकृत्या भवन्ति। एतेषां सकारः षत्वं नापद्यते इत्यर्थः। यथा—चतुःसहस्रं गव्यस्य (ऋ० ५।३०।१५), पृदाकुसानुर्यजतो गवेषणः (ऋ० ८।१७।१५), त उषो अद्रिसानो (ऋ० ६।६५।५)।

सुते, सोमे, वक्षणे, अप्रामि, चर्षणि, स्वभिष्टि इत्येवं शब्दोपधाभूता सर्व्वे एव पद्यादिभूतसकाराः प्रकृत्या भवन्ति। यथा—सुते सुते न्योकसे (ऋ० १।९।१०), अप्रामिसत्य मघवन् (ऋ० ८।६१।४)।

अभिसत्वा रयिस्थानो यासिसीष्ठाः सिसक्ति च ।

तिस्तिरे तिस्तिराणा च सिसिचे सिसिचुश्च न ॥ १४ ॥

अभिसत्वा (ऋ० १०।१०३।५), रयिस्थानः, यासिसीष्ठाः, सिसक्ति, तिस्तिरे, तिस्तिराणा, सिसिचे, सिसिचुः—इत्येतेषु यथाप्राप्तं षत्वं प्रतिषिध्यते।

गोष्ठादिव गोषतमा उपष्टुत्

सप्रवादो नार्षदः पर्य्यषस्वजत् ।

स्वादुषंसदः पुरुषन्तिशब्दः

सुषंसदं सुषमिधानुसेषिधत् ॥ १५ ॥

ष्ठादिव ( ऋ॰ १०।९७।८ ), गोषतमाः, उपष्टुत्, सप्रवादः र्यन्ताः नार्षदः, पर्यषस्वजत्, स्वादुषंसदः, पुरुषन्ति इतिशब्दः नक्तान्तः इतग्रथौ:, सुषंसदम्, सुषमिधा, अनुसेषिधत् इत्येतेषु नपात्यते।

**तकारे पूर्व्वपदान्तो व्यापन्नो रेफसंहिते।**

**नामिपूर्व्वो विग्रहे तु त्वा त इत्यनुदात्तयोः ॥१६॥**

।रेफसंलग्ने तकारे परत्वावस्थिते नामिपूर्वः पूर्वपदस्यान्तभूतः ।: सत्वं प्राप्तः इति यावत् सकारः षकारमापद्यते। यथा—प्रदिशो ाः ( ऋ॰ १।३१।१४ )। पूर्वपदान्त इति किम्—प्रमतिस्त्वं स नः ( ऋ॰ १।३१।१० )। अरेफसंहिते इति किम्—चतुस्त्रिंशद् नः ( ऋ॰ १।१६२।१८ )।

वेग्रहे असमासस्थले तु पुनः त्वा, ते इत्येतयोः पदयोः वस्थितयो सतोरनुदात्तयोर्व्यापन्नः सकारः षत्वमापद्यते। यथा— ा मन्त्तम् ( ऋ॰ १०।१२४।६ ), आभिष्टे अद्य गोभिर्गृणन्तः ॰ ४।१०।४ )।

**अग्निरेकाक्षरस्यादौ नकिश्चाथो तनूष्विति।**

**तत्तन्युस्ततक्षुस्तेतीग्रमितुरात्तरेषु निः ॥ १७ ॥**

अग्निरित्येतस्य विसर्जनीयो व्यापन्नः तकारात्मकस्य एकाक्षरस्य यादौ वर्त्तमानः षत्वमापद्यते। यथा—अग्निष्टं ब्रह्मणा सह ॰ १०।१६२।२ )। एकाक्षरस्यादिविति किम्—अग्निस्तुविश्र- ।मम् ( ऋ॰ ५।२५।५ )।

नकिरित्यस्यापि विसर्जनीयो व्यापन्न स्तकारात्मके एकाक्षरे पदे भूते षत्वमापद्यते। यथा—नकिष्टं कर्म्मणा नशत् (ऋ॰ ८।३१।१७)।

अपि च 'तनूषु' इत्येतस्मिन् अनेकाक्षरे पदे परतः नकिरित्यस्य विसर्जनीयो व्यापन्नः षत्वमापद्यते। यथा—नकिष्टनुषु येतिरे (ऋ' ८।२०।१२)।

तत्, ततनुः, ततक्षुः, तम्, तोग्रम् इत्येतेषु उत्तरेषु सत्सु निरित्येतस्य विसर्जनीयो व्यापन्नः सन् षत्वमापद्यते। यथा—निष्टज्जभार (ऋ' १०।६८।८), अतिनिष्टतन्युः (ऋ' १।१४१।१३)।

पायुभिः पक्षभिस्त्रिभिर्दद्विर्वेरस्मयुः शुचिः।
उत्तरे त्वमितीयुष्टे वावृधुष्टे सधिष्टव ॥ १८ ॥

गोभिष्टरेम क्रतुष्टं नाहुर्निष्षिध्वरीः प्रभाः।
वन्दारुः षष्टिराविस्त्रिर्बाह्वोरित्यनुदात्तयोः ॥ १९ ॥

त्वमिति पदे उत्तरे पायुभिः, पक्षभिः, त्रिभिः, दद्भिः, वेः, अस्मयुः, शुचिः—इत्येतेषां विसर्जनीयो व्यापन्नः षत्वमापद्यते। यथा—सवितः पायुभिष्ट्वम् (ऋ' ६।७१।३)।

ईयुष्टे (ऋ' १।११३।११), वावृधुष्टे (ऋ' १०।७३।२), सधिष्टव (ऋ' ८।४३।८), गोभिष्टरेम (ऋ' १०।४२।१०), क्रतुष्टम् (ऋ' ५।३५।१), एतेषु षत्वं निपात्यते।

आहुः, निष्षीध्वरीः, प्रभोः, वन्दारुः, षष्टिः, आविः, त्रिः, बाह्वोः —इत्येषां पदानां सम्बन्धिनो विसर्जनीयस्य 'त्वात इत्यनुदात्तयोः' (५।१६) इति यदुक्तं तन्न भवति। यथा—आहुस्ते त्रीणि दिवि बन्धनानि (ऋ' १।१६३।३)।

ऋकारर्कारौ षकारो नकारं
समानपदेऽवग्रह्ये नमन्ति।

**अन्तःपदस्थमककारपूर्वा**

**अपि सन्ध्याः सन्ध्य ऊष्माप्यनिङ्ग्ये ॥ २० ॥**

सन्ध्याः सन्धिजा असन्ध्या अपि अककारपूर्वा ऋकार-रेफ-षकारा अवग्रह्ये द्विखण्डे समाने नकारेण सह एकस्मिन् पदे वर्त्तमाना अन्तः-पदस्थं नकारं नमन्ति णत्वमापादयन्ति। यथा—प्रविद्वान् पितृयाणम् ( ऋ' १०।२।७ ), प्रयाणे जातवेदसः ( ऋ' ८।४३।६ ), विदुर्विषाणम् ( ऋ' ५।४४।११ )। अन्तःपदस्थमिति किम्—चिन्मनसा परि यन् ( ऋ' १।१७३।११ ), समानपदे इति किम्—त्रिरनुव्रते जने ( ऋ' १।३४।४ )। अवग्रह्य इति किम्—उष्ट्रानां विंशतिं शता ( ऋ ८।४६।२२ ) अककारपूर्वा इति किम्—यमसा कृपनीलम् ( ऋ' १०।२०।३ )।

सन्धौ भवः सन्ध्यः सन्धिज ऊष्मापि अनिङ्ग्ये पदे वर्त्तमानो नकारं नमति। यथा—यदि क्षोशमनु ष्वणि ( ऋ' ६।४६।१४ ) सन्ध्य इति किम्—वृषनाम शूषे ( ऋ' ८।८७।५४ )।

**न मध्यमैः स्पर्शवर्गैर्व्यवेतं**

**परि प्र ऋषीन्द्रादिषु चोत्तमेन।**

**तथा सकारशकारव्यवेतं**

**सर्वादिषु पूर्व्वपदान्तगं च ॥ २१ ॥**

मध्यमैः स्पर्शवर्गैः चवर्गटवर्गतवर्गैर्व्यवहितं नकारं न नमन्ति पूर्वभूता ऋकाररेफषकारा इति शेषः। यथा—ऋजुनीती नो वरुणः ( ऋ' १।९०।१ ), अभिष्टने ते अद्रिवः ( ऋ' १।८०।१४ ), निवर्तन वर्त्तय ( ऋ' १०।१९।८ )।

परि, प्र, ऋषि, इन्द्र इत्येवमादिषु पदेषु पूर्वभूतेषु सत्सु उत्तमेनापि स्पर्शवर्गेण पवर्गेणेति यावत् व्यवहितं नकारम् ऋकाररेफषकारा न नमन्ति। यथा—परिपानमन्ति ( ऋ॰ ५।४४।११ )।

सकारशकारव्यवहितं नकारम् ऋकाररेफषकारा न नमन्ति सर्वेष्वपि पदेषु पूर्वभूतेषु न केवलं पर्य्यादिषु इत्यर्थः। यथा—परिशयानम् अर्णः ( ऋ॰ ३।३२।११ ), त उषो अद्रिसानो ( ऋ॰ ६।६५।५ )।

पूर्वपदस्य चान्तगतं नकारम् ऋकाररेफषकारा न नमन्ति। यथा—कर्म्मन् कर्म्मन्नृक्षतसूतिः ( ऋ॰ १।१०२।६ )।

**नाभिनिर्णिक्प्रवादादौ यकारस्पर्शसंहितम्।**
**कर्म्मनिष्ठां दीर्घनीथे भानुशब्दे हिनोमि च ॥२२॥**

'नाभि' 'निर्णिक्' शब्दयोरादिभूतं नकारमृकाररेफषकारा न नमन्ति। यथा—रथेन वृषनाभिना ( ऋ॰ ८।२०।१० ), अतः सहस्रनिर्णिजा ( ऋ॰ ८।८।११ )।

यकारसंलग्नं स्पर्शसंलग्नं च नकारम् ऋकाररेफषकारा न नमन्ति। यथा—हरिमनुग्रसायकः ( ऋ॰ १०।९६।३ ), वृत्रघ्ने परिषिच्यसे ( ऋ॰ ९।९८।१० )।

'कर्म्मनिष्ठां' 'दीर्घनीथे' इत्येतयोः पदयो नकारमृकाररेफषकारा न नमन्ति। यथा—भुत्यं कर्म्मनिष्ठाम् ( ऋ॰ १०।८०।१ ), दीर्घनीथे दमूनसि ( ऋ॰ ८।५०।१० )।

भानुशब्दस्य नकारमृकारादयो यथासम्भवं न नमन्ति। यथा—स्वर्भानोरध ( ऋ॰ ५।४०।६ )।

हिनोमीत्यस्य च नकारमृकारादयो न नमन्ति। यथा--परि हिनोमि मेधया ( ऋ॰ ८।१०४।६ )।

ह्रस्वोदयं त्वेषपूर्व्वमादिषु

त्रिशुभ्रयुष्मादिषु चोभयोदयम् ।

अहकारेष्वधिकात्तरेषु च

पुरः पुनर्दुश्चतुर्ज्योतिरादिषु ॥ २३ ॥

'त्वेष', 'पुरु' इत्येवमादिषु पदेषु वर्त्तमानौ रेफषकारौ ह्रस्व उदयः परभूतो यस्य तं तादृशं नकारं न नमतः । यथा—उग्रस्त्वेष नृम्णः ( ऋ० १०।१२०।१ ), पुरुनृम्णाय सत्वने ( ऋ० ८।४५।२१ )। ह्रस्वोदयमिति किम्—पुरूणीथा जातवेदो जरस्व ( ऋ० ७।८।६ )।

त्रि, शुभ्र, युष्मा इत्येवमादिषु पदेषु वर्त्तमानौ रेफषकारौ उभयोदयम् ह्रस्वोदयं दीर्घोदयं च नकारं न नमतः। यथा—त्रिनाके त्रिदिवे दिवः ( ऋ० ९।११३।९ ), वहेथे शुभ्रयावाना ( ऋ० ८।२६।१९ ) युष्मानीतो अभयम् ( ऋ० २।२७।११ )।

हकारवर्जितेषु अधिकत्रात्तरेषु चतुरक्षरादिषु इति यावत् पदेषु वर्त्तमाना नकारो णत्वं नापद्यते पुरः, पुनः, दुः, चतुः, ज्योतिः इत्यादिषु पूर्व्वभूतेषु। यथा—पुरोयावानम् ( ऋ० ८।८४।८ ), पुनरागा पुनर्नव ( ऋ० १०।१६१।५ ), दुर्नियन्तुः ( ऋ० १।१९०।६ )। अहकारेष्विति किम्—जयतः पुनर्हणः ( ऋ० १०।३४।७ ), अधिकत्रात्तरेषु इति किम्—दुर्णामा योनिम् ( ऋ० १०।१६२।१ )।

उस्रयामणोऽनुस्रयामणे सुषामणे

वृषमण्यवोऽधिषवण्या प्रणयः ।

दूळ्यदूणाशदूलभप्रवादा

दुर्दूभूतमक्षरं तेषु नन्तृ ॥ २४ ॥

उस्रयामणि, अनुस्रयामणि, सुषामणि, वृषमण्यवः, अधिषवण्या, प्रणयः

—एतेषु षट्सु पदेषु णत्वं निपात्यते। "यकारस्पर्शसंहितम्" (५।२२) इति निषेधस्य प्रतिप्रसवोऽयम्।

दूढ्य, दूणाश, दूळभ इत्येतेषु दन्त्यस्य मूर्द्धन्यभावा निपात्यन्ते। दुरित्येदत्तरं मात्रिकं, दूभूतं द्विमात्रिकं सत् एतेषु पदेषु नत्त्, मूर्द्धन्यभावमापादयतीत्यर्थः। यथा—न दूढ्य अनु ददासि (ऋ॰ १।१८०।५)।

अव्यवेतं विग्रहे विघ्नकृद्भी
रेफोष्माणौ सर्व्वपूर्व्वौ यथोक्तम्।
आनीन्नुतंप्र नोनुवुर्नोनुमश्च
नयत्यर्थं च प्रपरीति पूर्व्वौ॥ २५॥

विग्रहे नानापदे वर्त्तमानं विघ्नकृद्भिः विघ्नकर्त्तारस्त्रयो मध्यमवर्गा स्तैरव्यवेतम् अव्यवहितं नकारं सर्वपूर्वौ ककारपूर्वावपीति यावत् रेफोष्माणौ नमतः। यथा—अध्वरेषु प्रणीयते (ऋ॰ ३।२७।८)। अव्यवेतमिति किम्—वीरवत्तत्त्वता नः (ऋ॰ ४।३६।८), प्लुताकारान्तं सषकारम् (५।२६) इति प्राप्तिः। सर्वपूर्वाविति किम्—शिक्षा णो अस्मिन् (ऋ॰ ७।३२।२६)।

'प्र', 'परि', इत्येतो पूर्वौ सन्तौ आनीत्, नुत्यम्, नोनुवुः, नोनुमः इत्येतानि पदानि नयत्यर्थं च नयतेः सर्वाणि रूपाणि च नमतः। यथा—अदेत्दु प्राणीत् (ऋ॰ १०।३२।८), प्रणुत्यं विप्रम् (ऋ॰ ५।१।७), वाजो सन् परिणीयते (ऋ॰ ४।१५।१)।

पर्णप्रया ब्रह्म सृतेषु नेषि
प्लुताकारान्तं सषकारमिन्द्र।
नते सु प्मंति सवनेषु पर्पि
स्वरयमा प्राक्र परीति तेनः॥२६॥

प्लुताकारान्तं प्लुतोऽकारोऽन्ते यस्य पदस्य तत् तथोक्तं पदम् सह षकारेण वर्त्तते इति सषकारम्। पुरुप्रिया, ब्रह्म, सुतेषु, नेषि, इन्द्र, सवनेषु, पर्षि, स्वर, अर्य्यमा, प्र, उरु, परि इत्येतैः पदैः, प्लुताकारान्तेन सषकारेण पदेन, नतिं प्राप्ताभ्यां सु, स्म—इत्येताभ्यां पदाभ्यां चोपहितं सत् 'न' इत्येतत् पदं नम्यते। यथा—पुरुप्रिया ण ऊतये (ऋ० ८।५।४), त्वरा णा अभिवार्य्यम् (ऋ० ८।३५।३), अभि षु णः (ऋ० ४।३१।३), आसु ष्मा णो मघवन् (ऋ० ६।४४।१८)।

हेलो मुञ्चतं मिलाय राया

पूषा गध्यविषच्छकारवत्।

नव्येभिस्त्मने वाजान् कृणोत

द्वे नय प्रतरं परेषु न ॥ २७ ॥

हेलः, मुञ्चतं, मिलाय, राया, पूषा, गधि, अविषत्, नव्येभिः, त्मने, वाजान्, कृणोत—इत्येतेषु पदेषु, छकारयुक्तेषु पदेषु, नय प्रतरं इत्येकत्र द्वये च परभूतेषु पुरुप्रियादिभिरुपपदैर्यदुक्तं णत्वं तन्न भवति। यथा—परि नो हेलः (ऋ० ७।८४।२), प्र नो यच्छतु (ऋ० १०।१४१।२), प्र नो नय प्रतरम् (ऋ० ८।७१।६)।

गोरोहेण निर्गमाणीन्द्र एणा

इन्द्र एणं स्वर्ण परा णुदस्व।

अग्नेरवेण वार्ण शक्र एणम्

एषा नति र्दन्त्यमूर्द्धन्यभावः ॥ २८ ॥

गोरोहेण (ऋ० १।१८०।५), निर्गमाणि, इन्द्र एणा, इन्द्रएणं, स्वर्ण, परा णुदस्व, अग्नेरवेण (ऋ० १।१२८।५), वार्ण, शक्र एणम्

इतीत्येषु नकारः सन्धिजानां पूर्वपदस्थानां निमित्तानां परतो वर्त्तमानः अपि णकारमापद्यते। यथा— गोरोहेण तौग्ग्रियः ( ऋ० १।१८०।५ )।

"अन्तःपादं नामुपधः मकारः" ( ५।१ ) इतीत्येवमादि यदुक्तं तन्नतिरिति वेदितव्यम्। दन्त्यानां वर्णानां मूर्द्धन्यभावो नतिरित्यभिधीयते।

## षष्ठं पटलम्।

स्वरानुस्वारोपहितो द्विरुच्यते
संयोगादिः स क्रमोऽविक्रमे सन्।
सोष्मा तु पूर्व्वेण सहोच्यते सकृत्
स्वेनासंयोगादिरपि छकारः॥ १ ॥

स्वरेण अनुस्वारेण च उपहितः संयोगादिर्वर्णः द्विरुच्यते अविक्रमे वर्त्तमानः सन्; विक्रमे विकृतविसर्जनीयस्थले तु भवतीत्येव। स एष द्विर्भावरूपो विधिः क्रमसंज्ञो वेदितव्यः। यथा—आ त्वा रथं यथोतये ( ऋ० ८।६८।१ ), सोमानं स्वरणम् ( ऋ० १।१८।१ )। संयोगादिरिति किम्—पितमरुताम् ( ऋ० १।३३।१ ), स्वरानुस्वारोपहित इति किम्—त्वावतः पुरूवसो ( ऋ० ८।४६।१ ), अविक्रमे इति किम्—यः प्राणतो निमिषतः ( ऋ० १०।१२१।३ )।

सोष्मा तु वर्णः स्वेन पूर्व्येण स्ववर्गीयेण पूर्व्येण सह सकृत् उच्यते। यथा—वि ह्यक्ख्यम् मनसा ( ऋ० १।१०९।१ )।

असंयोगादिश्छकारोऽपि द्विरुच्यते। यथा—उपच्छायामिव ( ऋ० ६।१६।३८ )।

परं रेफात् स्पर्श एवं लकाराद्
ऊष्मणो वा नावसितं न रेफः।
वोष्मा संयुक्तोऽनुपधो न तूष्मा
स्वरोष्मपरो न परक्रमोपधा ॥ २ ॥

रेफात् परं व्यञ्जनं क्रामति द्विर्भवतीत्यर्थः। यथा—अर्द्ध वीरस्य ( ऋ॰ ७।१८।१६ )।

लकारात् परं स्पर्शो वर्णश्च क्रामति। यथा—महत्तदुल्ब्बम् ( ऋ॰ १०।५१।१ )। स्पर्श इति किम्—वनस्पते शतवल्शः ( ऋ॰ ३।८।११ )।

ऊष्मणः परश्च स्पर्शो वा क्रामति। यथा—'प्र अस्तौत्' इत्यतः 'प्रास्त्तौत्', 'प्रास्तौत्' वा ( ऋ॰ १०१०५।१ )। न खलु पदावसाने वर्त्तमानं रेफात् परं व्यञ्जनं क्रामति। यथा—दर्त्, वर्क्। रेफश्च न क्रामति।

अनुपधः नास्ति उपधा पूर्वभूतो यस्य तादृशः संयुक्त ऊष्मा वा क्रामति। यथा—ह्ह्वयाम्यग्निम्, यद्वा ह्वयाम्यग्निम् ( ऋ॰ १।३५।१ )।

न तु खलु ऊष्मा स्वरपरो वा ऊष्मपरो वा सन् क्रामति। यथा—पर्षि ( ऋ॰ ८।६७।११ ), न तु पर्ष्षि।

न च खलु परक्रमस्य परभूतक्रमस्य उपधा क्रामति। यथा—उल्ब्बम् इत्यत्र बकारस्य क्रमे कृते तत्क्रमोपधाभूतस्य लकारस्य क्रमो न भवति।

सहातिशाय पवमान यस्य
ह्व तने चेतुग्रपहितः पदादिः।

**ऋकारो दीर्घेण च मेति वर्ज्जं**

**संयुक्तं तु व्यञ्जनं शाकलेन ॥ ३ ॥**

सह, अतिहाय, पवमान, यस्य, इ तने च—इतीएतैरुपहित: पदादिम्छकारो न क्रामति। यथा—अतिहाय छिद्रा (ऋ० १।१६२।२०)।

मा इतीएतत् वर्ज यित्वा अनेएन दीर्घेण उपहित: पदादिम्छकारो न क्रामति। यथा—मर्म्माणि ते वर्म्मणा छादयामि (ऋ० ६।७५।१८), मा इत्यनेनोपहितत्वे तु—माच्छेद्म (ऋ० १।१०८।३)।

संयुक्तं तु व्यञ्जनं पदादिभूतं दीर्घात् परं सत् न क्रामति शाकलेन विधानेन। स्वरानुस्वारोपहितो द्विरुच्यते (६।१) इत्यादि-कस्यापवादोऽयम्। यथा—आ त्वा रथम् (ऋ० ८।६८।१)। अत्र शाकलसंहितायां 'त्वा' इति क्रमो न भवति; संहितान्तरे तु भवतीएव। अपरे दीर्घग्रहणं पदादिग्रहणं च नानुवर्त्तयन्ति—अविशेषेण सर्वत्रैव च शाकलं विधानमिच्छन्ति। तन्मते च 'तव त्यात्' (ऋ० ८।१५।७) इत्यत्रापि 'त्य' इति शाकलसंहितायां क्रमो न भवति।

**पदान्तीयो ह्रस्वपूर्व्वो ङकारो**

**नकारश्च क्रामत उत्तरे स्वरे।**

**अनादेशे पटलेऽस्मिन् विधानं**

**सर्व्वत्र विद्यादपि वैकृतानाम् ॥ ४ ॥**

पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्च क्रामत: स्वरे उत्तरे परभूते सतीत्यर्थ:। यथा—कीदृङ्ङिन्द्र: सरमे (ऋ० १०।१०८।३), अहन्नहिं परि शयानम् (ऋ० ३।३२।११)। ह्रस्वपूर्व इति कस्मात्—अर्वाङेहि सोमकामं (ऋ० १।१०४।९), पदान्तीय इति किम्—सिनीवालि पृथुष्टुके (ऋ० २।३२।६)।

पदान्तपदाद्योः अनादेशे निर्द्देशाभावे अस्मिन् पटले द्विर्वचनादि यद् विधानं तत् 'पदान्तादिष्वेव विकारशास्त्रम्' (२।२) इत्येतां परिभाषामुपमर्द्य सर्व्वत्र भवतीति विद्यात्। अपि वैकृतानां वर्णानां किं पुनः प्राकृतानाम्। के पुनर्वैकृताः ये पदपाठे अदृष्टाः। यथा—प्रथमास्तृतीयभूता (४।१) अन्तःपाताः (४।७) इत्येवमादयः।

**अभिनिधानं कृतसंहितानां**

**स्पर्शान्तःस्थानामपवाद्य रेफम्।**

**सन्धारणं संवरणं श्रुतेश्च**

**स्पर्शोदयानामपि चावसाने ॥ ५ ॥**

स्पर्शोदयानां स्पर्शपराणां स्पर्शानां रेफम् अपवाद्य वर्जयित्वा अन्तःस्थानां च वर्णानां कृतसंहितानां सतां सन्धारणं वर्णश्रुतेश्च संवरणं भवति। तदेतत् अभिनिधानं नाम। यथा—उप मा षड्| द्वा द्वा (ऋं ८।६८।१४) इह षड् इत्यत्राभिनिधानम्।

अवसाने अन्ते वर्त्तमानानामपि एतेषां वर्णानामेवमभिनिधानं भवति। यथा—वाक्|, विट्|, यत्|, त्रिष्टुप्|।

**अन्तःस्थाः स्वे स्वे च परेऽपि रक्ता**

**लकार ऊष्मस्वपि शाकलेन।**

**खकारे चैवमुदये ककारः**

**ख्यातेर्धातो रपृशतेर्वा पकारः ॥ ६ ॥**

रक्ता अरक्ता वा अन्तःस्था अभिनिधीयन्ते स्वे स्वे। यथा—यँ यँ| युजम् (ऋं २।२५।२), अङ्गादङ्गाल्| लोम्नो लोम्नः (ऋं १०।१६३।६) स्वे स्वे चेति किम्—सिनीवाल्यै।

लकारः अभिनिधीयते ऊष्मसु अपि परतः शाकलेन विधानेन। यथा—वनस्पते शतवल् | शः ( ऋ॰ ३।८।११ )।

खकारपरः ख्यातेर्धातोः ककारोऽभिनिधीयते। यथा—अक् | ख्यद्दे व इत्यत्र। रप्शतेर्धातोः पकारोऽभिनिधीयते। यथा—विरप् | शी गोमती मही ( ऋ॰ ४।१७।२० )।

पदान्तीया यरवोष्मोदयाश्च
स्पर्शाः पदादिष्ववरे मकारात्।
असंयुक्तं शाकलं तन्न पद्ये
स्वित्युत्तरे वा त्वनेकाक्षरान्त्याः ॥ ७ ॥

मकारादवरे मकारादन्ये पदान्तीयाः स्पर्शाः अभिनिधीयन्ते पदादिषु पदानामादिभूतेषु य, र, व, ऊष्मा—इत्येतेषु परभूतेषु। यथा—यद्यद् | यामि ( ऋ॰ ८।६१।६ )।

'लकार ऊष्मस्वपि शाकलेन (६।६) इत्येवमादि यदुक्तं शाकलं विधानं तदसंयुक्तं वेदितव्यम्।

सु इत्येतस्मिन् उत्तरे परभूते पद्ये पदावयवे सति शाकलं विधानं न भवतीति वेदितव्यम्। यथा—अप्स्वग्ने सधिष्टव (ऋ॰ ८।४३।९)।

अनेकाक्षरान्त्यास्तु स्पर्शाः वा शाकलं विधानम् आपद्यन्ते पदावयवे 'सु' इति परतः। यथा—वाजमवत् | सु, वाजमवत्सु (ऋ॰ ५।८५।२)।

सर्व्वत्रैके करणस्थानभेदे
वा शाकलं प्रथमे स्पर्शवर्गे।
स्पर्शा यमानननुनासिकाः स्वान्
परेषु स्पर्शेष्वनुनासिकेषु ॥ ८ ॥

एके चाचार्य्याः सर्वत्र पद्ये च अपद्ये च इति यावत् करणभेदे स्थानभेदे उभयोर्भेदे च विभाषा शाकलं विधानम् इच्छन्ति। यथा— सक्रत् | सु नः यद्वा सक्रत्सु नः ( ऋ' १०।३३।३ ), अव् । जाम् यद्वा अव् जाम् ( ऋ' ७।३४।१६ )।

प्रथमस्पर्शवर्गस्य कवर्गस्य इति यावत् एके आचार्य्याः शाकलं विधानमिच्छन्ति। यथा—'सम्यक् | स्रवन्ति' ( ऋ' ४ ५८।६ )

अननुनासिकाः स्पर्शाः स्वान् यमान् आपद्यन्ते, अनुनासिकेषु स्पर्शेषु परेषु। यथा—पलिक्नी इत्यतः पलिकँ्क्नीः ( ऋ' ५।२।४ )। अननुनासिका इति किम्—अर्वाङ् नरा ( ऋ' ७।८२ ८ )।

न स्पर्शस्योष्मप्रकृतेः प्रतीयाद्
यमापत्तिं नाभिनिधानभावम्।
यमः प्रकृत्यैव सदृक् श्रुतिर्वा
यमे न मुख्यास्ति समानकाला ॥ ९ ॥

ऊष्मप्रकृतेः ऊष्मवर्णेभ्यो जातस्य स्पर्शस्य यमापत्तिं यमभावं न प्रतीयात् न जानीयात्। यथा—'प्र दोधुवत् श्मश्रुषु' इत्यतः प्र दोधुवच् छ्म श्रुषु ( ऋ' २।११।१७ )।

ऊष्मप्रकृतेः स्पर्शस्य अभिनिधानभावं च न प्रतीयात्।

यस्य यमापत्तिरुच्यते तस्मादुत्तरं तत्स्वरूप एव वर्णो भवतीत्यर्थः। अथवा यमोच्चारणे न समानकाला मुखे भवा श्रुतिरस्ति यया यमस्तद्रूपो लक्ष्यते।

अनन्यस्तु प्रकृतेः प्रत्ययार्थो
न संयोगं स्वरभक्तिर्विहन्ति।

**यमान्नासिक्या स्वरभक्तिरुत्तरा**

**गार्ग्यस्योष्मा सोष्मणो वर्ज्जयेत्तम् ॥ १० ॥**

प्रत्ययार्थः परनिमित्तकार्य्यं तत्र यमः प्रकृत्यभिन्नः। तदाश्रयाणि कार्य्याणि लभते इत्यर्थः। तस्मात् 'उपध्मातेव धमति' (ऋ' ५।८।५) इत्यत्र सोष्मानुपूर्व्वेण सङ्घोच्यते मकृत् (६।१) इति दकारेण सङ्घोचरते यमः।

न खलु स्वरभक्तिः संयोगकार्य्यं विहन्ति। तथाच—या सुजूर्णिः (ऋ' १०।८५।६) इत्यत्र स्वरभक्तिव्यवधानेऽपि 'परं रेफात्' (६।२) इति नियमेन क्रमो भवति।

यमात् उत्तरं नासिकास्थानस्वरभक्तिरागमो भवति गार्ग्यस्य भगवतोऽभिप्रायेण। यथा—पलिक्ँक्नीः (ऋ' ५।२।४)।

तस्यैवाभिप्रायेण सोष्मणो यमादुत्तरो नासिकास्थान ऊष्मा आगमो भवति। तम् ऊष्माणं वर्जयेत्। यथा—अमथ् (सँ) घ्नादन्यम् (ऋ' १।८३ ६)।

**नादः परोऽभिनिधानाद्ध्रुवं तत्**

**तत्कालस्थानमश्रुति त्वघोषात्।**

**नासिकास्थानमनुनासिकाच्चेद्**

**अन्तःस्थायाः पूर्व्वस्वरूपमेव ॥ ११ ॥**

घोषवतोऽभिनिधानात् परो नाद आगमो भवति। ध्रुवसंज्ञञ्च तत् भवति। तत्कालस्थानम् अभिनिधानकालस्थानञ्च तत्। यथा—अर्वाग् | देवाः।

अघोषात् अभिनिधानात् परं ध्रुवमश्रुति भवति। यथा—वाक् | पतङ्गाय।

अनुनासिकात् अभिनिधानात् परं ध्रुवं नासिकास्थानं वेदितव्यम्। यथा—अर्वाङ् | नराः।

अन्तःस्थायाः परं ध्रुवं पूर्वस्वरूपमेव भवति। यथा—यँ | यँ युजम्।

**व्यालेः सर्व्वत्राभिनिधानलोपः**
**परक्रमे स्वररेफोपधे न।**
**सवर्णपूर्वस्य सहध्रुवस्य**
**विपर्य्ययो ध्रुवशिष्टेऽपरेषाम्॥ १२॥**

व्यालेराचार्य्यस्य मते सर्वत्र अभिनिधानस्य लोपो भवति। तस्यैवाचार्य्यस्य मते च परक्रमे, स्वरोपधे, रेफोपधे च अभिनिधानस्य लोपो न भवति। यथा—मरुत्त्सदुत्त् | त्त्वम् इत्यादि।

एतस्मिन् ध्रुवशिष्टे ध्रुवविधाने अपरेषामाचार्य्याणां मते सवर्णपूर्वस्य ध्रुवसहितस्य विधानस्य विपर्य्ययो लोपो वेदितव्यः।

**रेफात् स्वरोपहिताद् व्यञ्जनोदयाद्**
**ऋकारवर्णा स्वरभक्तिरुत्तरा।**
**विच्छेदात् स्पर्शोष्मपराच्च घोषिणो**
**द्राघीयसो तूष्मपरे तरा क्रमे॥ १३॥**

स्वरोपहितात् स्वरपूर्वात् व्यञ्जनोदयात् व्यञ्जनपरात् च रेफात् उत्तरम् ऋकारवर्णा ऋकाररूपा स्वरभक्तिः उपजायते। यथा—यदद्य कर् (ऋ) हि कर् (ऋ) हि चित् (ऋ८।७३।५)।

स्पर्शपरादूष्मपराच्च घोषिणः घोषवतः विच्छेदात् अभिनिधानात् उत्तरम् स्वरभक्तिर्भवति। यथा—अर्वाग् देवाः, शतवल्शः।

ऊष्मपरा तु स्वरभक्तिः द्राघीयसी वेदितव्या। इतरा ह्रस्वा स्वरभक्तिः ऊष्मणः क्रमे भवति।

सर्वत्रैके स्वरभक्तेरभावं
रेफोपधामपरे विद्यमानाम्।
अक्रान्तोष्मप्रत्ययाभावमेके
पूर्वोत्तरस्वरसरूपतां च॥ १४॥

एके आचार्य्याः सर्वत्र अन्तःपदे नानापदे च रेफाच्च विच्छेदात् च स्वरभक्तेरभावं मन्यन्ते।

अपरे आचार्य्या रेफोपधां स्वरभक्तिं विद्यमानां मन्यन्ते।

अक्रान्त ऊष्मा प्रत्ययः परभूतो यस्याः स्वरभक्तेस्तस्या अभावं मन्यन्ते एके आचार्य्याः।

रेफात् पूर्वस्वरसरूपतामुत्तरस्वरसरूपतां च स्वरभक्तेरेके आचार्य्या मन्यन्ते। न केवलम् ऋकाररूपा स्वरभक्तिर्भवतीत्यर्थः। यथा—धूर् (ऊ) षदम्, बर् (ह) हिषदम्।

ऊष्मोदयं प्रथमं स्पर्शमेके
द्वितीयमाहुरपदान्तभाजम्।
स्थातौ खकारयकारा उ एके
ताविव स्थातिसदृशेषु नामसु॥ १५॥

ऊष्मोदयम् अपदान्तभाजं प्रथमं स्पर्शम् एके आचार्य्या द्वितीयं स्पर्शमाहुः। यथा—'शशः क्षुरम्' इत्यतः 'शशः खषुरम्' (ऋ० १०।२८।८)। 'शतक्रतुः त्सरत्' इत्यतः शतक्रतुः थ्सरत् (ऋ०

८।१।११ ), 'ऋक्सामाभ्याम्' इत्यत: ऋख्सामाभ्याम् ( ऋ० १०।८५।११ )।

क्षातेर्धातो: ककारषकारयो: स्थाने खकारयकारौ कर्त्तव्यौ इत्येके आचार्य्या:। यथा—अख्यद्देव: यद्वा अक्खद्देव (ऋ० ४।१४।१)।

तावेव खकारयकारौ ख्यातिसदृशेषु नामसु कर्त्तव्यौ मन्यन्ते। यथा—'सख्ये सखाय:' यद्वा 'सक्ख्ये सखाय:' ( ऋ० १।१६५।११ )

## सप्तमं पटलम्

दीर्घं ह्रस्वो व्यञ्जनेऽन्यस्त्वृकाराद्
यथादिष्टं सामवश: स सन्धि:।
सैव प्लुति र्या स्वरेषूपदिष्टा
योनिमारैगादिषु चोदयादे: ॥ १ ॥

ऋकारादन्यो ह्रस्व: दीर्घत्वमापद्यते व्यञ्जने परत: इत्येतदधिकृतं वेदितव्यम्। यथादिष्टम् इत ऊर्द्ध्वं यत्र यत्र वक्ष्यामस्तत्र तत्रोदाहरिष्याम:। सामवशो नाम स सन्धिर्वेदितव्य:। या ह्रस्वस्य दीर्घता सा एव प्लुतिर्वेदितव्या। या च स्वरसन्धिषूपदिष्टा 'एवाँ अग्निमतिषु सा प्लुतोपधेति' ( २।३२ ) सा च प्लुतिर्ह्रस्वस्य दीर्घता वेदितव्या। 'योनि मारैग्' ( २।४० ) इत्येवमादिषु च उदयादेर्ह्रस्वस्य या दीर्घता निपातिता सा च प्लुतिरिति वेदितव्या।

मक्षू त्वुकार: प्लवते सर्व्वत्राप्यपदान्तभाक्।
सुता याहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे ॥२॥

'मक्षु' इत्यस्य अपदान्तभाज: किं पुन: पदान्तभाज उकार: प्लवते

प्लुतो भवति सर्वत्रापि। यथा—मक्षू देववतः ( ऋ ८।३१।१५ ), मक्षू मक्षू कृणुहि ( ऋ ३।३१।२० ), मक्षू युभिः ( ऋ ७।७४।४ )

सुताः, याहि इत्येताभ्यामन्येषु पदेषु परभूतेषु अच्छ इत्येतत् पदं विग्रहे वर्त्तमानं प्लवते। यथा—अच्छा वद ( ऋ ५।८३।१ )। सुतायाहीत्यतोऽन्येषु इति किम्—इन्द्रम् अच्छ सुता इमे ( ऋ ८।१०६।१ ), अच्छ याह्या वह ( ऋ १।३४।७ )

**अनाकारोपधश्चान्त्यो येतुरुत्तरपदस्य यः।**
**उदात्तादेर्द्व्यक्षरस्य नास्येति व्यञ्जनोपधः॥ ३ ॥**

यः अनाकारोपधः यस्य आकार उपधा न भवति एवंविधस्य उदात्तादेर्द्व्यक्षरस्य उत्तरपदस्य यः अन्त्यो यकारः स प्लवते। यथा—'आ यूया धृषाः' ( ऋ २।८७।३ )। अनाकारोपध इति किम्—'परिदाय रसं दुहे' ( ऋ १।१०५।२ ), य इति किम्—'इमां समेत पश्यत' (ऋ १०।८५।३३), उत्तरपदस्येति किम्—'मर्य्यश्रीः स्पृहयद्वर्णः ( ऋ २।१०।५ )।

'अस्य' इत्ययमन्तो न प्लवते व्यञ्जनोपधः सन्। यथा—'कृष्टरूपमस्य वव्रेः' ( ऋ ४।४२।१ ), व्यञ्जनोपध इति कस्मात्—'अवास्या शिशुम्' ( ऋ १।१४०।१० )।

**नियूय पिष्टतमयाभिपद्य**
**प्रास्य सङ्गत्यानुदृश्याभिवृत्य।**
**आरभ्य संमील्य मक्षूङ्गमाभि**
**रभिवल्ग्य यत्र निषद्य वीति च॥ ४ ॥**

नियूय, पिष्टतमय, अभिपद्य, प्रास्य, सङ्गत्य, अनुदृश्य, अभिवृत्य,

आरभ, सम्मील्य, मन्तुङ्गमाभिः, अभिवल्ग्य, यत्र, निषद्य वि— इतीएतानि पूर्वलक्षणप्राप्तानि न प्लवन्ते। यथा—'वनस्पते रसनया नियूय पिष्टतमया' ( ऋ॰ १०।७०।१० )। 'प्रास्य पारं नवतिम्' ( ऋ॰ १।१२१।१३ )।

**नहि जह्यभि वीर्य्येण कृधीति कृणुथेति च।**
**एतान्येकाक्षरे पदे चप्रोभाव्ये पराणि च॥ ५॥**

नहि, जहि, अभि, वीर्य्येण, कृधि, कृणुथ, इतीएतानि पदानि प्लवन्ते एकाक्षरे पदे परभूते तस्मिन् पदे चप्रसन्धिसङ्घटने। यथा— 'न ही न्वस्य' ( ऋ॰ ४।१८।४ ), जही न्यत्रिणम् ( ऋ॰ ६।५१।१४ )। एकाक्षरे इति किम्—'तमर्यमाभि रक्षति' ( ऋ॰ १।१३६।५ )। चप्रोभाव्ये इति कस्मात्—'न हि नु ते' ( ऋ॰ ६।२७.३ )।

पराणि यानि च इतः परम् उच्यन्ते 'तयाक्षरे योज चेति' ( ७।७ ) इति यावत् तानि च सर्वाण्येव प्लवन्ते एकाक्षरे चप्रोभाव्ये च।

**युक्ष्व मन्दस्व विद्मेति हीति विद्धि पिब त्विति।**
**जुहोत यज धासथ शिशीत भरेति स्विति॥ ६॥**

युक्ष्व, मन्दस्व, विद्म—इतीएतानि प्लवन्ते 'हि' इति परभूते चप्रोभाव्ये। यथा—'युक्ष्वा ह्यरुषो रथे' ( ऋ॰ १।१४।१२ )। 'मन्दस्वा ह्यन्धसः' ( ऋ॰ ३।४१।६ ), 'विद्मा ह्यस्य' ( ऋ॰ ८।२।२१ ),

विद्धि, पिब—इतीएते प्लवेते 'तु' इतीएतस्मिन् परतः चप्रोभाव्ये। यथा—'विद्धी त्वस्य' ( ऋ॰ ७।३१।४ ), 'पिबा त्वस्य' (ऋ॰ ८।१।२६ )।

जुहोत, यज, धासथ, शिशीत, भर—इतीएतानि प्लवन्ते 'सु' इतीएतस्मिन् परतः चप्रोभाव्ये। यथा—'जुहोता स्वध्वरम्'

( ऋ॰ ३।९।८ ), 'यजा स्वध्वरम्' (ऋ॰ १।४५।१), 'तं शिशीता स्वध्वरम्' ( ऋ॰ ८।४०।११ ), भरा स्वश्व्या ( ऋ॰ १०।११३।१० )।

सु नु हीतीतेषु परेष्वधेति
त्मन्यऋतेन मुञ्चताद्येति वीति।
सु न्वितानर्थपरयोरुकारः
पदं तयोरुत्तरे योज घेति ॥ ७ ॥

सु, नु, हि इत्येतेषु परतः 'अध' इत्येतत् प्लवते चेत्प्रोभाव्ये। यथा—'अधा स्वश्वाः' ( ऋ॰ ७।५६।१ ), 'अधा न्वस्य' ( ऋ॰ ७।८८।२ ), 'अधा ह्यग्ने' ( ऋ॰ ४।१०।२ )।

त्मन्य, ऋतेन, मुञ्चत, अद्य इत्येतानि 'वि' इत्येतस्मिन् परभूते प्लवन्ते चेत्प्रोभाव्ये। यथा—'त्मन्या व्यश्नुहो मदम्' (ऋ॰ ८।४५।२२), 'ऋतेना व्यायन् (ऋ॰ १०।१३९।४), 'मुञ्चता व्यंहः' ( ऋ॰ ४।१२।६ ), 'अद्या व्यख्यत' ( ऋ॰ १।१६१।१३ )।

सु, नु इत्येतयो रनर्थपरयोः नास्ति 'अर्थ' इति परं ययो स्तथाभूतयोः परतः सतोः 'उ' इति पदं प्लवते चेत्प्रोभाव्ये। यथा—'इमाम् ऊ स्वासुरस्य' ( ऋ॰ ५।८५।५ ), 'कदू न्वस्याकृतम्' ( ऋ॰ ८।६६।९ )। अनर्थपरयोरिति कस्मात्—'इरस्यसीदु न्वर्थ्यः' ( ऋ॰ १०।८६।३ )।

तयोः सु, नु इत्येतयोरिति यावत् उत्तरे नु इत्येतस्मिन् इति यावत् परभूते सति योज, घ इत्येते प्लवेते चेत्प्रोभाव्ये। यथा—'योजा न्विन्द्र' ( ऋ॰ १।८२।१ ), 'प्रघा न्वस्य' ( ऋ॰ २।१५।१ )।

मृलयद्भ्यां वसुवित्तमं यत् सोमं जातवेदसम्।
भरतेतेष्वपादान्तोऽद्येति करणादिषु ॥ ८ ॥

मृळयद्भ्यां, वसुवित्तमं, यत्, सोमं, जातवेदसं—इत्येतेषु परभूतेषु 'भरत' इत्येतत् प्लवते। यथा—'भरता मृळयद्भ्यां स्वादिष्ठम्' ( ऋ' १।१३६।१ ), 'भरता सोममस्मै' ( ऋ' २।१४।६ ), 'देव्या धिया भरता जातवेदसम्' ( ऋ' १०।१७६।२ )।

इत उत्तरं यत् वक्ष्यते 'चिन्महित्वं गोर्गृणानः स ते परं न्विति' (७।१०) तत्र अपादान्त इत्येतद् अधिकृतं वेदितव्यम्। यथा—प्रनू महित्वं वृषभस्य वोचम् ( ऋ' १।५९।६ )। अपादान्त इति कस्मात् —महाँ इन्द्रः परश्च नु महित्वम् ( ऋ' १।८।५ )।

'अद्य' इत्येतत् प्लवते करणादिषु परश्लोकोक्तेषु करणं, च, चित्, करते, वृणीमहे, भवतम्, कृणोतु, भवत, स्वस्तये—इत्येतेषु इति यावत् परभूतेषु। यथा—'अद्या च नो मृळयत' ( ऋ' २।२९।२ ) 'सूक्तैरद्या वृणीमहे' ( ऋ' ५।८२।७ )।

करणं च चित् करते वृणीमहे
भवतं कृणोतु भवत स्वस्तये।
पुर्विति चित्पुरुहूतो नृषूतः
सहस्राणि पुरुभुजा धियायते ॥ ९ ॥

'पुरु' इत्येतत् प्लवते चित्, पुरुहूतः, नृषूतः, सहस्राणि, पुरुभुजा, धियायते—इत्येतेषु परतः। यथा—'इन्द्रः पुरू पुरुहूतः (ऋ' ८।२।३२), 'एष पुरू धियायते' ( ऋ' ९।१५।२ )।

वहेति त्वं दुहितर्दैव्यमुत्तरं
द्युम्नं रुद्रं नव्यमेतेषु वर्द्धय।
चिन्महित्वं गोर्गृणानः स ते परं
न्वितान्त्ये चेन्मर्त्तशब्दाद्रिवः परे ॥ १० ॥

'वह' इत्येतत् प्लवते त्वम्, दुहितः, दैव्यम् इत्येतेषु परभूतेषु। यथा,—'जातवेदो वहा त्वम्' ( ऋ' १।४४।१ ), आ वहा दुहितर्दिवः ( ऋ' ५।७९।८ ), 'आ वहा दैव्यं जनम्' ( ऋ' १।३१।१७ )।

वर्द्धय इत्येतत् प्लवते द्युम्नम्, रुद्रम्, नव्यम्—इत्येतेषु परभूतेषु। यथा—'वर्द्धया द्युम्नमिन्द्र' ( ऋ' १।१०३।३ ), 'वर्द्धया नव्यमर्कैः' ( ऋ' १।१९०।१ )।

'नु' इत्येतत् प्लवते चित्, महित्वम्, गोः, गृणानः, सः, ते इत्येतेषु परभूतेषु। यथा—'अद्या चिन्नू चित्' ( ऋ' ६।३०।३ ), 'प्र नू महित्वम्' (ऋ' १।५९।८), 'यस्य नू गोः' ( ऋ' ६।२२।५ )।

अन्त्ये 'स', 'ते' इत्येतयोः इति यावत् परतो मर्त्तशब्दः अद्रिवः-शब्दो वा चेत् यदि भवेताम् तदैव 'नु' इति प्लवते इत्यर्थः। यथा—प्र नू स मर्त्तः शवसा (ऋ' १।६४।१३), हि नू ते अद्रिवः (ऋ' ८।२१।७)।

तूतुजानो मतिभिर्भोजनानि
नो दद्धि स्तोमं भूरि योनिं त्वमेषु।
भरेत्येतन्न नु चिद् यो भवेति
स्तोतृभ्यो द्युम्नो शत मे परेषु ॥ ११ ॥

'भर' इत्येतत् प्लवते तूतुजानः, मतिभिः, भोजनानि, दद्धि, स्तोमम्, भूरि, योनिम्, त्वम्—इत्येतेषु परभूतेषु। यथा—प्र भरा तूतुजानः ( ऋ' १।६१।१२ ), 'मा भरा भोजनानि' ( ऋ' ५।४।५ ), 'भरा दद्धि तन्नः' ( ऋ' ४।२०।१० ), 'प्र भरा स्तोममस्मै' ( ऋ' १०।४२।१ ), 'आ भरा भूरि पश्वः' ( ऋ' ३।५४।१५ )।

'चिद् य' इत्येतस्मिन् परभूते 'नु' इत्येतत् न प्लवते। यथा—'उतो नु चिद् यः' ( ऋ' ८।४०।१० )।

भव इत्येतत् प्लवते स्तोतृभ्यः, द्युम्नो, शत, मे, इत्येतेषु परेषु।

यथा—'दक्षिणतो भवा मे' (ऋ० १०।८३।७), 'भवा स्तोतृभ्यो अन्तमः' (ऋ० ३।१०।८)।

शोचा यविष्ठ्यैवा यथा कर्त्ता यत् सादया सप्त ।
अर्चा मरुद्भ्यस्तिष्ठा नः सना स्वः पारया नव्यः॥१२॥

शोचा यविष्ठ्य (ऋ० ६।१६।११), एवा यथा (ऋ० ४।३०।१), कर्त्ता यत् (ऋ० १।८६।१०), सादया सप्त (ऋ० १०।३५।१०), अर्चा मरुद्भ्यः (ऋ० ५।५२।५), तिष्ठा नः (ऋ० १।३०।६), सना स्वः (ऋ० ८।४।२), पारया नव्यः (ऋ० १।१८९।२), इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

बोधा स्तोत्रे चक्रमा ब्रह्मवाहः
शंसा गोषूच्छा दुहितर्वदा तना ।
आजा नष्टं जम्भया ता अधा महो
गन्ता मा युक्ष्वा हि सृजा वनस्पते ॥१३॥

बोधा स्तोत्रे (ऋ० १०।१५६।५), चक्रमा ब्रह्मवाहः (ऋ० १।१०१।९), शंसा गोषु (ऋ० १।३७।५), उच्छा दुहितः (ऋ० ५।७९।९), वदा तना (ऋ० १।३८।१३), आजा नष्टं (ऋ० १।२३।१३), जम्भया ताः (ऋ० २।२३।९), अधा महः (ऋ० ५।५२।३), गन्ता मा (ऋ० ८।२०।१), युक्ष्वा हि (ऋ० ६।१६।४३), सृजा वनस्पते (ऋ० १।१३।११) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

अग्ने रक्षा णः स्तिष्ठा हिरण्ययं
सोता वरेण्यं शोचा मरुद्वृधः ।

शिक्षा स्तोतृभ्यो भूमा विवन्धुरः

पिबा मधूनां सोता परीति च ॥ १४ ॥

अग्ने रक्षा णः ( ऋ॰ ७।१५।१३ ), तिष्ठा हिरण्ययं ( ऋ॰ ८।६८।१६ ), सोता वरेण्यं ( ऋ॰ ८।१।१८ ), शोचा मरुद्वृधः ( ऋ॰ ३।१३।६ ), शिक्षा स्तोतृभ्यः ( ऋ॰ २।११।२० ), भूमा विवन्धुरः ( ऋ॰ ७।६८।२ ), पिबा मधूनाम् ( ऋ॰ ४।४६।१ ), सोता परि ( ऋ॰ ८।१०८।७ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

सत्स्व मिमिक्ष्व दधिष्व वसिष्व

श्रोत सुनोत हिनोत पुनात ।

विद्म जगृभ्म ररभ्म ववन्म

चाम सुपप्तनि मन्थत मत्स्व ॥ १५ ॥

सर रद रण जिन्व धारयार्षं

चर यज यच्छ दशस्य साध सेध ।

तप रुज मृल वर्ध यावयाव

श्रवय नमस्य विदाष्ट क्राष्व जोष ॥ १६ ॥

शृणुधि शृणुत यन्त यच्छत

स्तव सिम गूहत कुत्र मोषथ ।

दिधृत पचत वृश्च विध्यताथ

मदथात्त यदीत पाथन ॥ १७ ॥

उपागत्यास्वलीकृत्या वव्राजाविष्टनोरुष्य ।

इष्कर्त्तैलिष्व मर्मृज्म बिभयेयर्त्त तच्छुतम् ॥१८॥

सार्द्धमद्यादिभिः प्लुतैः पादादौ व्यञ्जनोदयम् ।

न्वेववर्ज्जं न संयोगे शेषे चापठिते सति ॥ १९ ॥

सच्व, मिमिच्च, दधिष्व, वसिष्व, श्रोत, सुनोत, हिनोत, पुनात, विद्म, जग्टभ्म, ररभ्म, ववन्म, चाम, सुपप्तनि, मन्यत, मत्स्व, सर, रद, रण, जिन्व, धारय, अर्ष, चर, यज, यच्छ, दशस्य, साध, सेध, तप, रुज, मृल, वर्द्ध, यावय, अत, अवय, नमस्य, विद, अष्ट, कृष्व, जोष, शृणुधि, शृणुत, यन्त, यच्छत, स्तत, सिम, गृहत, कुल, मोषय, दिष्टत, पचत, तृम्व, विध्यत, अथ, मदथ, अत्त, यदि, इत, पाथन, उपागत्य, अस्वलीकृत्य, वव्राज, अविष्टन, उरुष्य, इष्कर्त्ता, ईलिष्व, मर्मृज्म, बिभय, इयर्त्त—इति एकोनसप्ततिसंख्यं पदं यद् अनुक्रान्तं, अद्य इत्येवमादिभिः ( ७।८—१४ इत्यत्रानुक्रान्तैः ) अद्य, पुरु, वह, वर्द्धय, नु, भर, भव, शोच, एव, कर्त्त, सादय, अर्च, तिष्ठ, सन, पारय, बोध, चक्रम, शंस, उच्छ, वद, आज, जम्भय, अध, गन्त, युत्त्व, सृज, रक्ष, सोत, शिक्ष, भूम, पिब इत्येतैरिति यावत् एकत्रिंशता पदैः सार्द्धं तच्छुतं पादादौ प्लवते व्यञ्जने प्रत्यये परभूते। यथा—सच्वा देव प्रणस्तुरः ( ऋ १।४२।१ ), मिमिच्चा समिलाभिरा ( ऋ १।४८।१६ ), दधिष्वा जठरे सुतम् ( ऋ ३।४०।५ )।

नु, एव इत्येते पदे वर्ज्जयित्वा यच्छुतं तत् संयोगे न प्लवते। यथा—अद्य त्वावन्वन्सु रेक्णाः ( ऋ ६।१६।२६ )। न्वेववर्जमिति कस्मात् नृष्टुत इन्द्र नू गृणानः ( ऋ ४।१६।२१ ), एवा त्वामिन्द्र ( ऋ ४।१९।१ )।

शेषे च दीर्घीभावविधाने अपठिते सति उक्तस्य उत्तराणि ( ८।६ ),

घा त्वद्रिक् (८।१३) इत्येवं यत्र पाठो नास्ति तत्र न संयोगे इत्यधिकृतं वेदितव्यम्।

वर्द्धं शुभ्रे रुज यः सेध राजन्
वह हव्यानि यदि मेऽध यामनि।
विद्म दातारमध धारयाध
यदध ते विश्वं पुरु वार्चं गाय ॥ २० ॥

वह वायो पिब मध्वः पुरु विद्वान्
पुरु विश्वान्यध वायुं पुरु शस्त।
यदि मृतयोरध जिह्वा पुरु विश्वा
पिब शुद्धं पिब राये वह कुत्सम् ॥२१॥

भरद्वाजेऽर्च देवाय यदि वा पुरु दाशुषे।
वह शुष्णायाध बह्वध यत् पुरु हीति न ॥२२॥

वर्द्धं शुभ्रे (ऋ' ७।८५।६), रुज यस्त्वा (ऋ' ८।५३।३), सेध राजन् (ऋ' १०।२५।७), वह हव्यानि (ऋ' १०।५१।५), यदि मे, अध यामनि, विद्म दातारम्, अध धारया, अध यत्, अध ते विश्वम्, पुरु वारम्, अर्च गाय, वह वायो, पिब मध्वः, पुरु विद्वान्, पुरु विश्वानि, अध वायुं, पुरु शस्त, यदि मृतयोः, अध जिह्वा, पुरु विश्वा, पिब शुद्धं, पिब राये, वह कुत्सम्, भर द्वाजे, अर्च देवाय, यदि वा, पुरु दाशुषे, वह शुष्णाय, अध बहु, अध यत्, पुरु हि—इत्येतेषु यथाप्राप्ता प्लुतिर्न भवति।

क्धीति परेषु सहस्रसां धियं
जरित्रे न इति तत्रेति चान्त्ये ।
सहस्रेण सुश्रवसं पवस्व
इ नो अधीत्येषु परेषु तेन ॥२३॥

'क्धि' इत्येतत् पदं प्लवते सहस्रसां, धियं, जरित्रे, नः इत्येतेषु परेषु । यथा—'क्धी सहस्रसाम् ऋषिम्' (ऋ॰ १।१०।११), 'क्धी धियं जरित्रे' ( ऋ॰ १०।४२।७ ), क्धी जरित्रे मघवन् ( ऋ॰ ८।८७।८ ), क्धी न ऊर्ध्वान् ( ऋ॰ १।३६।१४ )।

अन्त्ये 'नः' इत्येतस्मिन् इति यावत् परभूते सति 'तत्र' इत्येतत् पदं प्लवते । यथा—'तत्रा नो ब्रह्मणस्पतिः' ( ऋ॰ ६।७५।१७ )।

सहस्रेण, सुश्रवसम्, पवस्व, 'नो अधि' इति पदद्वयमेकत्र—इत्येतेषु परभूतेषु 'तेन' इत्येतत् प्लवते । यथा—'तेना सहस्रेणा वयम्' ( ऋ॰ ७।५५।७ ), 'तेना पवस्वान्धसा' ( ऋ॰ ९।६१।१९ ), 'तेना नो अधि वोचत' ( ऋ॰ ८।२०।२६ )।

देवं वेनं केतमित्युत्तरेषु
दधातेति श्रुधि वंस्वेति नः परे ।
वेदेति विश्वस्य भूमं म उत्तरे
शुनःशेपे च प्लवते यकारे ॥ २४ ॥

देवं, वेनं, केतम्—इत्येतेषु परभूतेषु 'दधात' इति प्लवते । 'दधाता देवमृत्विजम्' ( ऋ॰ ५।२२।२ ), 'दधाता वेनमादिशे' ( ऋ॰ ८।२१।५ ), 'दधाता केतमादिशे' ( ऋ॰ ८।२१।६ )

अधि, वंस्व इत्येते प्लवेते 'नः' इति परभूते। यथा—'अधी न इन्द्र' ( ऋ' ६।२६।१ ), 'वंस्वा नो वार्या' ( ऋ' ८।२३।२७ )।

'वेद' इत्येतत् प्लवते विश्वस्य, भ्रमं, मे—इत्येतेषु परभूतेषु। यथा—'वेदा विश्वस्य मे धिरः' ( ऋ' ६।४२।३ ), 'वेदा भ्रमश्चित्' ( ऋ' ८।६१।१२ ), 'वेदा मे देव' ( ऋ' ५।१२।३ )।

शुनःशेपे ऋषौ शुनःशेपदृष्टे मन्त्रे 'वेद' इत्येतत् प्लवते यकारे परभूते। यथा—'वेदा योऽवीनां ( ऋ' १।२५।७ )।

ब्रह्मेति नो इ च गिरः कृणोति
ते कृणोत तूतोदितिचोत्तरेषु।
अभीति नो नु नवन्ते सतो नरं
द्वा सत्स्वित्याग्नेऽर्षं परे तु मुख्ये ॥२५॥

'ब्रह्म' इत्येतत् प्लवते नः, 'च गिरः' इति द्वयम्, कृणोति, ते, कृणोत, तूतोत्—इत्येतेषु परभूतेषु। यथा—'ब्रह्मा ण इन्द्र' ( ऋ' ७।२८।१ ), 'ब्रह्मा च गिरो दधिरे' ( ऋ' ६।३८।३ )।

'अभि' इत्येतत् प्लवते नः, नु, नवन्ते, सतः, नरं, द्वा, सत्, सु इत्येतेषु परभूतेषु। यथा—'अभी न आ ववृत्स्व' ( ऋ' ४।३१।४ ), 'अभी नवन्ते अद्रुहः' ( ऋ' ९।१००।१ )।

'नो, नु, नवन्ते' इत्यादीनां मुख्ये आदिभूते 'नः' इत्येतस्मिन् इति यावत् परभूते ततश्च आ, अग्ने, अर्ष इत्येतेषु परतः 'अभि' इत्येतत् प्लवते। यथा—'अभी न आ ववृत्स्व' (ऋ' ४।३१।४), 'अभी नो अर्ष दिव्या' ( ऋ' ९।५९।५१ )।

चक्रुर्वदेते दशस्यन्तसमुद्रो
रथेन नः सप्तऋषीन् मदन्ति।

ते वो भयन्ते नियुद्भिः क्रपीटं
रथस्य सोमस्य मती रणन्ति ॥ २६ ॥

चक्रुः, वर्तेते, दशस्यन्, समुद्रः, रथेन, नः, सप्तऋषीन्, मदन्ति, ते, वः, भयन्ते, नियुद्भिः, क्रपीटं, रथस्य, सोमस्य, मतिः, रणन्ति इत्येते चक्रादयः ।

समुद्रं द्वे स्वर्ण नवग्वशब्दो
दशग्वं दंसिष्ठ वसूनि नो वसु ।
वृत्रं निर्द्वे नु यतिभ्यः सहन्तः
पृथिव्यां निर्हंसि समत्सु पावक ॥ २७ ॥

समुद्रं, 'स्वर्ण' इति द्वयम्, नवग्वः, दशग्वं, दंसिष्ठ, वसूनि, नः, वसु, 'वृत्रं नि' इति द्वयम्, नु, यतिभ्यः, सहन्तः, पृथिव्यां, निः, हंसि, समत्सु, पावक इत्येते समुद्रादयः ।

यत्रेति चक्रादिषु नरः सुपर्णा इति च ।
समुद्रादिषु येनेति तत्रेति मे सदो रथम् ॥२८॥

'यत्र' इत्येतत् प्लवते चक्रादिषु ( ७।२६ ) पदेषु नरः, सुपर्णाः इत्येतयोश्च परभूतेषु । यथा—यत्रा चक्रुरमृता गातुम् ( ऋ० ७।६३।५ ), यत्रा नरः सञ्च वि च द्रवन्ति ( ऋ० ६।७५।११ ) ।

'येन' इत्येतत् प्लवते समुद्रादिषु ( ७।२७ ) पदेषु परभूतेषु । यथा—येना समुद्रमसृजः ( ऋ० ८।३।१० ), येना स्वर्ण ततनाम ( ऋ० ५।५४।१५ ), येना दंशिष्ठ क्रत्वने ( ऋ० ८।२४।२५ ) ।

'तत्र' इत्येतत् प्लवते मे, सदः, रथम् इत्येतेषु परभूतेषु । यथा

—'तत्रा मे नाभि राततां' ( ऋ॰ १।१०५।९ ), 'तत्रा सदः कृणवसे' ( ऋ॰ ६।१६।७ ), 'तत्रा रथमुपशग्मं सदेम' ( ऋ॰ ६।७५।८ )।

**अवेति नो नु कल्पेषु नूनं वाजेषु पृत्सुषु ।**
**आद्यो चेद्वाजयुं पार्ये कमग्ने मघवन् परे ॥२९॥**

'अव' इत्येतत् प्लवते नः, नु, कल्पेषु, नूनं, वाजेषु, पृत्सुषु इत्यादिषु परभूतेषु। यथा—'अवा नो वाजयुं रथम्' ( ऋ॰ ८।८०।६ ), अवा नु कं ज्यायान् ( ऋ॰ १०।५०।५ )।

'नो, नु' कल्पेषु, इत्यादीनामाद्ये नः, नु इत्येते इति यावत् परतश्चेत् 'अव' इत्येतत् प्लवते, यदि नः, नु इत्येतयोः परतः वाजयुं, पार्ये, कम्, अग्ने, मघवन् इत्येतादीनि स्युः। यथा—'अवा नो वाजयुं रथम्' ( ऋ॰ ८।८०।६ ), 'अवा नः पार्ये धने' ( ऋ॰ ८।९२।९ ), अवा नो मघवन् वाजसातौ ( ऋ॰ ६।१५।१५ )।

**रास्वा पितः शतेना नो वर्ध्स्वा सु श्रुधी हवम्।**
**मन्दस्वा सु वहस्वा सु वनेमा ते नही नुवः ॥३०॥**

रास्वा पितः ( ऋ॰ १।११४।९ ), शतेना नः ( ऋ॰ ४।४६।२ ), वर्ध्स्वा सु ( ऋ॰ ८।१३।२५ ), श्रुधी हवम् ( ऋ॰ २।११।१ ), मन्दस्वा सु ( ऋ॰ ८।६।३९ ), वहस्वा सु ( ऋ॰ ८।२६।२३ ), वनेमा ते ( ऋ॰ ८।१९।२० ), नही नुवः ( ऋ॰ १।१६७।९ ), इत्येतेषां पूर्वपदान्ताः प्लवन्ते।

**पाथा दिवो धाता रयिं सृजता गयसाधनम्।**
**रास्वा चोरू न शग्धी नः सृजता मधुमत्तमम् ॥३१॥**

पाथा दिवः ( ऋ॰ १।८६।१ ), धाता रयिम् ( ऋ॰ ३।५४।१२ ),

सृजता गयसाधनम् ( ऋ॰ ९।१०४।२ ), रास्वा च ( ऋ॰ १।११४।६ ), उरू न ( ऋ॰ ६।४७।१४ ), ग्मध्री नः ( ऋ॰ ८।३।११ ), सृजता मधुमत्तमम् ( ऋ॰ ९।६२।११ ) इतरे तेषां पूर्वपदान्ताः प्लवन्ते।

जहो चिकित्वो वेत्था हि रक्षथा न हता मखम्।
युयोता शरुं स्वेना हि वनेमा ररिमा वयम् ॥३२॥

जहो चिकित्वः ( ऋ॰ ५।३।७ ), वेत्था हि ( ऋ॰ ६।१६।३ ), रक्षथा न ( ऋ॰ ८।४७।१ ), हता मखम् ( ऋ॰ ९।१०१।१३ ), युयोता शरुम् ( ऋ॰ ८।१८।११ ), स्वेना हि ( ऋ॰ ८।२१।६ ), वनेमा ररिमा वयम् ( ऋ॰ २।५।७ ) इतीतरेतेषां पूर्वपदान्ताः प्लवन्ते।

प्रप्रा वो अस्मे धामा ह सना ज्योतिरपा वृधि।
ऋध्यामा ते वामदेवे जुहोता मधुमत्तमम् ॥ ३३ ॥

प्रप्रा वो अस्मे ( ऋ॰ १।१२९।८ ), धामा ह ( ऋ॰ ६।२।९ ), सना ज्योतिः ( ऋ॰ ९।४।२ ), अपा वृधि ( ऋ॰ ७।२७।२ ), वामदेवदृष्टे मन्त्र—ऋध्यामा ते ( ऋ॰ ४।१०।१ ), जुहोता मधुमत्तमम् ( ऋ॰ ७।१०२।३ ), इतीतरेतेषां पूर्वपदान्ताः प्लवन्ते।

यच्चा महे धिष्वा शवो जनिष्वा देववीतये।
अधा त्वं ह्यद्याद्या श्वः श्वः सचस्वा नः स्वस्तये॥३४॥

यच्चा महे ( ऋ॰ ५।४२।११ ), धिष्वा शवः ( ऋ॰ २।११।१८ ), जनिष्वा देववीतये ( ऋ॰ ६।१५।१८ ), अधा त्वं हि ( ऋ॰ ८।८४।६ ), अद्याद्या श्वः श्वः (ऋ॰ ८।६१।१७), सचस्वा नः स्वस्तये ( ऋ॰ १।१।९ ), इतरे तेषां पूर्वपदान्ताः प्लवन्ते।

## अष्टमं पटलम् ।

अन्तःपादं विग्रहे एष्वपृक्त
उकारो व्रजस्य सु धा नमोभिः ।
शुचिं पवित्रं तु मह्रोनुं चाप्नुतं
सुतस्येति यद्यादयोदया न ॥ १ ॥

सोमसुतिं चर्किराम स्तवाम
स्तवाना ग्रभाय रथं श्रुधीति ।
ते अस्ति ते महिमनः प्रवोचत
प्र वोचं नः सुमना इ पदास्य ॥२॥

यदित ऊर्द्धमुच्यते तत् अन्तःपादं, विग्रहे च भविष्यति ।

अपृक्तः अव्यञ्जन उकारः प्लवते दीर्घोभवति व्रजस्य, सु, धा, नमोभिः, शुचिं, पवित्रं, तु, मह्रोः, अप्नुनं नु, सुतस्य इत्येतेषु पदेषु परतः । यथा—अस्या ऊ षु णः (ऋ॑ १।१३८।८४), तम् ऊ शुचिम् (ऋ॑ २।३५।३), मायाम् ऊ तु (ऋ॑ ८।८८।६) ।

यदि व्रजस्येत्यादीनाम् उदयानां परभूतानामुदयाः सोमसुतिं, चर्किराम, स्तवाम, स्तवाना, ग्रभाय, रथं, श्रुधि, ते अस्ति, ते महिमनः, प्रवोचत, प्रवोचं, नस्सुमनाः, इत्येतानि न भवन्ति तदैव उकारः प्लवते इति वाक्यशेषः । यथा—इमामु षु सोमसुतिम् (ऋ॑ ७।८३।६), युवोरु षु रथं हुवे (ऋ॑ ८।२६।१), इमा उ षु श्रुधी गिरः (ऋ॑ १।२५।५) ।

महे दधिध्वं तिर मुञ्च नो मृध-
श्चर नमध्वं नम ते नयन्त।
स्वितीतेष्वेकाक्षरयोः पराणि
चेदुपेन्द्राग्नेऽवाध्वरमायुरेत्विति ॥३॥

महे, दधिध्वं, तिर, मुञ्च, नः, मृधः, चर, नमध्वं, नम, ते, नयन्त इत्येतेषु परभूतेषु 'सु' इत्येतत् प्लवते। यथा—प्र सू महे (ऋ॰ ५।४२।१३), प्र सू तिरा शचीभिः (ऋ॰ ८।५३।६), प्र सू नयन्त (ऋ॰ १।१४८।३), नि षू नमध्वम् (ऋ॰ ३।३३।९)।

महे इत्यादिषु, ये एकाक्षरे पदे 'नः, ते', इतीते इति यावत् तयोः पराणि चेत् यदि उप, इन्द्र, अग्ने, अव, अध्वरम्, आयुः, एतु, इत्येतानि भवन्ति तदा 'सु' इत्येतत् प्लवते। यथा—प्र मू न उप यन्तु (ऋ॰ १।३९।१), मो षू ण इन्द्रात्र (ऋ॰ १।१७३।१२), जुषस्व सू नो अध्वरम् (ऋ॰ ३।२४।२)।

सदेत्येतद्योनिषु पीतये परम्
धन्वेत्येतत् सोम राट् पूयमानः।
यदीति क्रत्वो मनसः कवीनां
सबन्धवो गोः सरमेति तेषु ॥ ४ ॥

सद इत्येतत् प्लवते योनिषु, पीतये इत्येतयोः पदयोः परतः। नि षदा योनिषु (ऋ॰ २।३६।४), नि षदा पीतये मधु (ऋ॰ ८।९७।८)।

धन्व इत्येतत् प्लवते सोम, राट्, पूयमान इत्येतेषु परभूतेषु।

यथा—प्र धन्वा सोम जागृविः ( ऋ॰ ६।१०६।४ ), ऋणो न तायुरति धन्वा राट् (ऋ॰ ६।१२।५), अभिस्वर धन्वा पूयमानः (ऋ॰ ६।६७।३)।

'यदि' इत्येतत् प्लवते क्रथः, मनसः, कवीनां, सबन्धवः, गोः, सरमा इत्येतेषु परतः। यथा—युवा यदी क्रथः पुनः ( ऋ॰ ५।७४।५ ), गुहा यदी कवीनाम् ( ऋ॰ १०।२२।१० ), गिरा यदी सबन्धवः ( ऋ॰ ६।१४।२ )।

चरेति पुष्टिं सोम चर्षणिप्रा

जनिमेति हन्ति सं जातवेदाः।

रन्धयेति येषु कं शासदुत्तरं न

नः कारे स्वितुप सातये परे॥ ५॥

चर इत्येतत् प्लवते पुष्टिं, सोम, चर्षणिप्राः इत्येतेषु परेषु। यथा—प्र चरा पुष्टिम् ( ऋ॰ ८।४८।६ ), प्र चरा सोम ( ऋ॰ १।६१।१६ ), प्र चरा चर्षणिप्राः ( ऋ॰ ७।३१।१० )।

'जनिम' इत्येतत् प्लवते हन्ति, सम्, जातवेदाः इत्येतेषु परेषु। यथा—जनिमा हन्ति शुष्णम् ( ऋ॰ ३।३१।८ ), जनिमा सं विविक्ताः ( ऋ॰ ३।५४।८ ), जनिमा जातवेदाः ( ऋ॰ ६।१५।१३ )।

'रन्धय' इत्येतत् प्लवते येषु, कं, शासत् इत्येतेषु परेषु। यथा—रन्धया येष्वस्मि ( ऋ॰ ६।१६।१२ ), रन्धया कञ्चिदव्रतम् ( ऋ॰ १।१३२।४ ), रन्धया शासदव्रतान् ( ऋ॰ १।५१।८ )।

'नः' इत्येतस्मिन् परभूते, ततः परञ्च उपसातये इत्येवं सति 'सु' इत्येतत् न प्लवते। यथा—अस्मा ऊ षु ण उप सातये ( ऋ॰ १।१३८।४ )।

मह्याव जय काव्ये न गूर्धय

भरेति स्वरिति प्रत्यये षट्।

मद पर्ष पिपृत धन्व यच्छत
रुहेमेति स्वस्तय उत्तराणि ॥ ६ ॥

'स्वः' इत्येतस्मिन् परतः मह्य, अव, जय, काव्येन, गूर्धय, भर इति षड् एतानि प्लवन्ते। यथा—महया स्वर्विदम् ( ऋ॰ १।५२।१ ), नृभिरवा स्वर्जय ( ऋ॰ ८।१५।१२ ), हनो वृत्रं जया स्वः ( ऋ॰ ८।८९।४ ), कविः काव्येना स्वर्चनाः ( ऋ॰ ९।८४।५ ), त्वं गूर्धया स्वर्णरम् ( ऋ॰ ८।१९।१ ), आ भरा स्वर्विदम् ( ऋ॰ ९।१०६।४ )।

'स्वस्तये' इत्येतस्मिन् परतः मद, पर्ष, पिपृत, धन्व, यच्छत, रुहेम इत्येतानि प्लवन्ते। यथा—'अनु मदा स्वस्तये' ( ऋ॰ ९।६३।२ ) अति पर्षा स्वस्तये ( ऋ॰ १।९७।८ ), अद्या देवासः पिपृता स्वस्तये ( ऋ॰ १०।६३।८ ), उरु णः शर्म यच्छता स्वस्तये ( ऋ॰ १०।६३।१२ ), अरिष्यन्त मा रुहेमा स्वस्तये ( ऋ॰ १०।६३।१४ )।

दधिम मदत तन्वि सिञ्चत
स्तव वदतानज रक्षतोक्षत।
पिपृत पृणत पृच्छत प्रुष स्थ
घ हिनवाय जुहोत पश्यत ॥ ७ ॥

चकृमाकृत भूम स्म शिशीत स्तोत पप्तत।
यथोदयानि सर्वाणि त्विति वैकाक्षरोदयम् ॥ ८ ॥

दधिम, मदत, तन्वि, सिञ्चत, स्तव, वदत, अनज, रक्षत, उक्षत, पिपृत, पृणत, पृच्छत, प्रुष, स्थ, घ, हिनव, अय, जुहोत, पश्यत, चकृम, अकृत, भूम, स्म, शिशीत, स्तोत, पप्तत—इत्येतानि सर्वाणि यथोदयानि प्लवन्ते। यथा—'यस्मिन् वयं दधिमा शंसम्' ( ऋ॰

१०।४२।६ ), इन्द्रं गोभिर्मदता वस्वो स्वर्णम् ( ऋ॰ १।५१।१ ), नध्वस्मा न स्तन्वो रेप आधुः ( ऋ॰ ४।८।८ ), सिञ्चता मद्यं मन्धः ( ऋ॰ २।१४।१ )।

'तु' इत्येतच्च एकाक्षरोदयं सत् एकाक्षरे पदे परभूते सतीति यावत् प्लवते। यथा—'आ तू न इंद्र वृत्र:' (ऋ॰ ८।७।११), एकाक्षरोदयमिति कस्मात्—'पिबा तु सोमं गोऋजीकम्' ( ऋ॰ ८।२३।७ )।

कदा हरिवो वरुणस्य चक्रतुः
सूर्य्यस्य निष्ट्या इव भूम तेषु न।
वस्त्राणि हि बावधे यज्ञियानां
ते दंसो द्वे नः सव शक्र तेषु तु ॥ ९ ॥

कदा, हरिवः, वरुणस्य, चक्रतुः, सूर्य्यस्य, निष्ट्या इव—इत्येतेषु परभूतेषु 'भूम' इत्येतत् न प्लवते। यथा—शूने भूम कदाचन (ऋ॰ १।१०५।३), अघाय भूम हरिवः परादै ( ऋ॰ ७।१९।७ ), मा हेले भूम वरुणस्य (ऋ॰ ७।६२।४), पितरा भूम चक्रतुः ( ऋ॰ १।१५९।२ ), भूम सूर्य्यस्य सन्दृशि ( ऋ॰ १०।३७।६ ), मा भूम निष्ट्या इव ( ऋ॰ ८।१।१३ )।

वस्त्राणि, हि, बावधे, यज्ञियानां, ते दंसो इति एकत्र पदद्वयम्, नः सव, शक्र इत्येतेषु परभूतेषु 'तु' इत्येतत् न प्लवते। यथा—स तु वस्त्राण्यध पेशनानि ( ऋ॰ १०।१।६ ), अध्वर्य्यवा तु हि षिञ्च ( ऋ॰ ८।३२।२४ ), वि तु बावधे रोदसी ( ऋ॰ ६।२९।५ ), मायामू तु यज्ञियानाम् ( ऋ॰ १०।८८।६ )।

चक्रमेति द्वे पदे भूरि दुष्कृतं
वर्द्धतां विप्रवचसो जिह्वयेति।

काण्वायना निष्कृतीरेतयोः स्थ
जाताः सुरथा हवनश्रुतश्च ॥ १० ॥

चक्रम इत्येतत् न प्लवते भूरि दुष्कृतम् इति द्वे पदे, वर्द्धतां, विप्रवचसः, जिह्वया इत्येतेषु च परतः। यथा—न वो गुहा चक्रम भूरि दुष्कृतम् (ऋ० १०।१००।७), प्राञ्चं यज्ञं चक्रम वर्द्धतां गाः (ऋ० ३।१।२), आ पुरन्दरं चक्रम विप्रवचसः (ऋ० ८।६१।८), यद्वो देवाश्चक्रम जिह्वया गुरु (ऋ० १०।३७।१२)।

काण्वायनाः, निष्कृतीः—इत्येतयोः परभूतयोः, जाताः, सुरथाः, हवनश्रुतः—इत्येतेषु च परभूतेषु 'स्थ' इत्येतत् पदं न प्लवते। यथा—सु देवा स्थ काण्वायनाः (ऋ० ८।५५।४), अथोयूयं स्थ निष्कृतीः (ऋ० १०।९७।९)। यथा—ये स्थ जाता अदितेः (ऋ० १०।६३।२), स्वश्वा स्थ सुरथाः (ऋ० ५।५७।२), कद्ध स्थ हवनश्रुतः (ऋ० ८।६७।५)।

स वा परं घेति कौत्सवैमदं
स्म राशिमित्यादिषु न प्रति ष्म च।
स्म ते परेषु व्रजनं वनस्पते
शुभे परुष्ण्यां स्म पुरा वृषाकपौ ॥११॥

सः, वा इत्येवं परं यस्य तथाभूतं 'घ' इत्येतत् पदं कुत्सस्य विमदस्य वा आर्षे वर्त्तमानं न प्लवते। यथा—अयं घ स तुरो मदः (ऋ० १०।२५।१०), आ घ वा याभिररुणीः (ऋ० १।११२।१९)। कौत्सवैमदम् इति कस्मात्—सुनोथो घा स मर्त्त्यः (ऋ० ८।४६।४)।

'स्म' इत्येतत् न प्लवते 'राशिम्' इत्यादिषु (८।१२) परभूतेषु इत्यर्थः।

प्रतिपूर्व्वं च सत् स्म इतेग्रतत् न प्लवते। यथा—प्रति ष्म रिषतो दह ( ऋ॰ १।१२।५ )।

'स्म ते' इत्येतस्मिन् परभूते ततश्च व्रजनं, वनस्पते, शुभे, परुष्णाम्रामित्येतेषु सत्सु पूर्वं न प्लवते। यथा—अध स्म ते व्रजनं कृष्णमस्ति ( ऋ॰ ८।३।२ ), उत स्म ते वनस्पते ( ऋ॰ १।२८।६ ), उत स्म ते शुभे नरः ( ऋ॰ ५।५२।८ ), उत स्म ते परुष्णाम्राम् ( ऋ॰ ५।५२।९ )।

'स्म पुरा' इत्येतत् न प्लवते वृषाकपौ वृषाकपिष्टष्टे मन्त्रे इति यावत्। यथा—'इं होत्रं स्म पुरा नारी' ( ऋ॰ १०।८६।१० ), वृषाकपाविति कस्मात्—ये स्मा पुरा गातू यन्तीव ( ऋ॰ १।६९।५ )।

राशिं वाजेषु मे सद्म पूषणं
तं हृंहद्धायि मा दुर्हणायतः।
यस्मै यद्वृत्रहत्येषु मावते
वातो यं यस्य मद्दुर्गृभीयसे ॥ १२ ॥

ये 'राशिम्' इत्यादयः पूर्वश्लोके सूचितास्तेऽत्र निर्दिश्यन्ते। तथा च—राशिं, वाजेषु, मे, सद्म, पूषणं, तं, हृंहत्, धायि, मा, दुर्हणायतः, यस्मै, यत्, वृत्रहत्येषु, मावते, वातः, यं, यस्य, मत्, दुर्गृभीयसे इति। इत्येतेषु परतः 'स्म' इत्येतत् न प्लवते इति पूर्व्वेणान्वयः। यथा—उत स्म राशिम् ( ऋ॰ ९।८७।९ ), प्र स्म वाजेषु नोऽव ( ऋ॰ ८।६०।१० ), उत स्म मेऽव्यत्यै पृणासि ( ऋ॰ १०।९५।५ )।

पृच्छा विपश्चितमवा पुरन्धिग्रा
घा त्वद्रिग्वीरान् वनुयामा त्वोताः।

जनया दैव्यं भुजेमा तनूभि

र्हा वहतो वासया मन्मना च ॥ १३॥

पृच्छा विपश्चितम् ( ऋ' १।४।४ ), अवा पुरन्ध्या ( ऋ' ५।३५।८ ), घा त्वद्रिक् ( ऋ' १०।४३।२ ), वीरान् वनुयामा त्वोताः ( ऋ' १।७३।९ ), जनया दैव्यम् ( ऋ' १०।५३।६ ), भुजेमा तनूभिः ( ऋ' ५।७०।४ ), हा वहतः ( ऋ' ५।४१।७ ), वासया मन्मना ( ऋ' १।१४०।१ ), इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

वेदा वसुधितिं रोमा पृथिव्या

वोचा सुतेषु धावता सुहस्त्यः ।

मुञ्चा सुषुवुषः स्वाद्मा पितूनाम्

इहा वृणीष्व बोधया पुरन्धिम् ॥ १४ ॥

वेदा वसुधितिं ( ऋ' ४।८।२ ), रोमा पृथिव्याः ( ऋ' १।६५।४ ), वोचा सुतेषु ( ऋ' ६।५९।१ ), धावता सुहस्त्यः ( ऋ' ८।४६।४ ), मुञ्चा सुषुवुषः ( ऋ' १०।८४।१४ ), स्वाद्मा पितूनाम् ( ऋ' १।६९।२ ), इहा वृणीष्व ( ऋ' ४।३१।११ ), बोधया पुरन्धिम् ( ऋ' १।१३४।३ ), इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

अवथा स कृणुथा सुप्रतीकं

तिरा शचीभिः कृणुता सुरत्नान् ।

गमन्ता नहुषोऽनयता वियन्तः

स्मा च्यावयनीरया वृष्टिमन्तम् ॥१५॥

अवथा सः ( ऋ॰ ४।३६।५ ), क्रणुथा सुप्रतीकम् ( ऋ॰ ६।२८।६ ), तिरा शचीभिः ( ऋ॰ ८।५३।६ ), क्रणुता सुरत्नान् ( ऋ॰ १०।७८।८ ), गमन्ता नहुषः ( ऋ॰ १।१२२।११ ), अनयता वियन्तः (ऋ॰ १०।६१।२७), स्मा च्यावयन् ( ऋ॰ ३।३०।४ ), ईरया वृष्टिमन्तम् ( ऋ॰ १०।९८।८ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

असृजता मातरं सू रथं हुवे
नयता बद्धं स्वापया मिथूदृशा ।
इता जयतागता सर्वतातय
ईरयथा मरुतो नेषथा सुगम् ॥ १६ ॥

असृजता मातरम् (ऋ॰ १।१०८।८ ), सू रथं हुवे ( ऋ॰ ८।२६।१ ), नयता बद्धम् ( ऋ॰ १०।३४।४ ), स्वापया मिथूदृशा ( ऋ॰ १।२९।३ ), इता जयत ( ऋ॰ १०।१०३।१३ ), आगता सर्वतातये (ऋ॰ १।१०६।५ ), ईरयथा मरुतः ( ऋ॰ ५।५५।५ ), नेषथा सुगम् ( ऋ॰ ५।५४।६ ), इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

अन्यता चित् पिबता मुञ्जनेजनं
घा स्या वोचेमा विदथेष्विता धियम् ।
इता नि यता वि दशस्यथा क्रिविं
चा बोधाति द्रावया त्वं किरा वसु ॥१७॥

अन्यता चित् ( ऋ॰ ८।२४।११ ), पिबता मुञ्जनेजनम् ( ऋ॰ ( ऋ॰ १।१६१।८ ), घा स्याः ( ऋ॰ ८।४८।२३ ), वोचेमा विदथेषु ( ऋ॰ १।४०।६ ), इता धियम् (ऋ॰ ५।४५।६), इता नि ( ऋ॰ १।५।१ ), यता वि ( ऋ॰ ८।१३।२० ), दशस्यथा क्रिविम् ( ऋ॰ ८।२०।२४ ),

ा बोधाति ( ऋ॰ १।७७।२ ), द्रावया त्वम् ( ऋ॰ ८।४।११ ), किरा
नसु ( ऋ॰ ७।८१।२ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

हा पदेव कर्त्तना श्रुष्टिं
योधया च जग्रभा वाचम् ।
पायया च तर्पया कामं
गातुया च मन्दया गोभिः ॥ १८॥

हा पदेव ( ऋ॰ ४।३१।५ ), कर्त्तना श्रुष्टिम् ( ऋ॰ ३।१४।९ ), योधया च ( ऋ॰ ३।४६।२ ), जग्रभा वाचम् ( ऋ॰ १०।१८।१४ ), पायया च ( ऋ॰ ३।५७।५ ), तर्पया कामम् ( ऋ॰ १।५४।९ ), गातुया च ( ऋ॰ ८।१६।१२ ), मन्दया गोभिः ( ऋ॰ ३।३०।२०, ऋ॰ ८।५०।४ ), इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

घा स्यालादेना सुमतिं वोचा नु व्यथया मन्युम् ।
नेथा च चक्रा जरसं भवता मृलयन्तश्च ॥ १९ ॥

घा स्यालात् ( ऋ॰ १।१०९।२ ), एना सुमतिं ( ऋ॰ ७।९६।२ ), वोचा नु ( ऋ॰ १।१३२।१ ), व्यथया मन्युम् ( ऋ॰ ६।२५।२ ), नेथा च ( ऋ॰ १०।१२६।२ ), चक्रा जरसम् (ऋ॰ १।८९।९ ), भवता मृलयन्तः ( ऋ॰ १।१०७।१ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

एवा चन भजा राये ररिमा ते भजा भूरि ।
श्रुधी न उभयत्वा ते भजा त्वं मृलया नश्च ॥२०॥

एवा चन ( ऋ॰ ६।४८।१७ ), भजा राये ( ऋ॰ १०।११२।१० ), ररिमा ते ( ऋ॰ ३।२२।२ ), भजा भूरि ( ऋ॰ १।८१।६ ), श्रुधी नः

( ऋ॰ १।१३३६ ), उभयता ते ( ऋ॰ ३।५३।५ ), भजा त्वम् ( ऋ॰ ७।२७।१ ), मृलया नः ( ऋ॰ ८।४८।८ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

**एकादशिद्वादशिनोर्लघावष्टममक्षरम् ।**
**उदये संहिताकाले नः कारे च गुरावपि ॥२१॥**

एकादशिद्वादशिनोः एकादशाक्षरद्वादशाक्षरयोः पादयोः अष्टम-मक्षरं प्लवते संहिताकाले लघौ स्वरे परभूते सति । यथा—तादीत्ना शत्रुं न किला विवित्से ( ऋ॰ १।३२।४ ), अग्ने सख्ये मा रिषामा वयं तव ( ऋ॰ १।९४।१ ) । लघाविति कस्मात् वृषा समत्सु दासस्य नाम चित् ( ऋ॰ ५।३३।४ ) ।

'नः' इत्येतस्मिन् परभूते गुरौ अपि स्वरे परतः एकादशद्वादशाक्षरयोः पादयोरष्टममक्षरं प्लवते । यथा—दुरभिह्रितो जरिमा सू नो अस्तु ( ऋ॰ १०।५९।४ ) ।

**दशमं चैतयोरेवं षष्ठं चाष्टाक्षरेऽक्षरम् ।**
**व्यूहैः सम्पत् समीच्योनं चैप्रवर्णैकभाविनाम् ॥२२॥**

एतयोः एकादशद्वादशाक्षरयोः पादयोरिति यावत् दशमम् अक्षरम् एवं यथापूर्वं संहिताकाले लघौ स्वरे परभूते सति नः कारे परभूते गुरौ परतोऽपि इति यावत् प्लवते । यथा—अहा विश्वा सुमना दीदिहो नः ( ऋ॰ ३।५४।२२ ), अवा रुद्रा अशसो हन्तना वधः ( ऋ॰ २।३४।९ ) ।

अष्टाक्षरे च पादे षष्ठम् अक्षरम् एवं प्लवते संहिताकाले लघौ नः कारे च गुरावपि इति यावत् । यथा—ईशानो यवया वधम् ( ऋ॰ १।५।१० ) ।

ऊने पादे चैप्रसन्धीनाम् एकीभावानां च व्यूहैः पृथक्करणैरित्यर्थः

पादस्य सम्यत् पूर्त्तिः समीचितव्या। यथा—उद्गत् स्वस्मा अकृणोत ना तृणाम् (ऋ॰ १।१६६।११)। अत्र 'स्वस्मा' इत्यस्य व्यूहेन सु अस्मा इति पाठेन 'न' इति दशममक्षरं भवति। तथा च द्वादशाक्षरस्य पादस्य दशममक्षरं प्लवते। प्रेता जयता नर ( ऋ॰ ८।१०३।१३ ) इत्यत्र च 'प्र इता' इति एकीभावव्यूहात् अष्टाक्षरस्य पादस्य षष्ठमक्षरं प्लवते।

**न वावृधन्त वातस्यावद्यानि जिघांससि।**
**सासह्याम ववृत्याम दीदिह्यष्टममूर्णुहि ॥२३॥**

वावृधन्त, वातस्य, अवद्यानि, जिघांससि, सासह्याम, ववृत्याम, ऊर्णुहि—इत्येतेषामन्त्याक्षराणि न प्लवन्ते। एकादशद्वादशाक्षरेषु पादेषु दशमाष्टमाक्षरभूतानि अष्टाक्षरे च पादे षष्ठाक्षरभूतान्यपि एतानि न प्लवन्ते इत्यर्थः। दीदिहि इत्येतस्य चान्त्यमक्षरं एकादशद्वादशाक्षरेषु पादेषु अष्टमं अक्षरं सत् न प्लवते। यथा—दुरत द्यामान वावृधन्त नृणाम् ( ऋ॰ १०।८३।१२ )। शाचा शोचिष्ट दीदिहि विशे ( ऋ॰ ८।४८।६ )।

**पुरुप्रजातस्याभि नः कृणुहि द्व्यक्षरोपधम्।**
**हर्य्यश्वोत भवन्त्विन्द्र सदनायास्ति नाम चित् ॥२४॥**

पुरुप्रजातस्य, अभि नः, द्व्यक्षरोपधं 'कृणुहि' इत्येतत्, हर्यश्व, उत, भवन्तु, इन्द्र, सदनाय, अस्ति, नाम चित् इत्येतानि च एकादशद्वादशाष्टाक्षरेषु पादेषु न प्लवन्ते। यथा—विदत् पुरुप्रजातस्य गुहा यत् ( ऋ॰ १०।६१।१३ )।

**चमसाँ इवाग्नि वसवान**
**द्वादशिनः सृजास्य विमदस्य।**

सुमखाय धारय ददातु
रक्ष धिया दधातु दिधिषेय ॥२५॥

चमसाँ इव, अत्रि, वसवान, अस्य, विमदस्य, सुमखाय, धारय, ददातु, रक्ष धिया, दधातु, दिधिषेय—इत्येतानि च एकादशद्वादशाष्टाक्षरेषु पादेषु न प्लवन्ते। सृज इत्येतत् च द्वादशाक्षरे पादे न प्लवते। यथा—धारया चमसाँ इव विवक्षसे ( ऋ॰ १०।२५।४ )।

अङ्ग सरस्वति पञ्च चरन्ति
ग्नाभिरिहेन्वसि रण्यसि धाव।
विद्धि षु णोऽभि षतः सुविताय
त्वा समिधान दधीमहि देव ॥२६॥

अङ्ग, सरस्वति, पञ्च, चरन्ति, ग्नाभिरिह, इन्वसि, रण्यसि, धाव, विद्धि षु णः, अभि षतः, सुविताय, त्वा समिधान, दधीमहि, देव—इत्येतानि च एकादश-द्वादशाष्टाक्षरेषु पादेषु न प्लवन्ते। यथा—इन्द्रा सोमा युवमङ्ग तरुत्रम् ( ऋ॰ ६।७२।५ )।

जामिषु जासु चिकेत किरासि
स्मासुऽप पात्यसि सोम शतस्य।
आयुषि चेतति विष्टपि मास्व
प्रोश्मसि मूर्द्धनि सद्म वरन्त ॥२७॥

जामिषु, जासु, चिकेत, किरासि, स्मासि, उप, पाति, असि, सोम, शतस्य, आयुषि, चेतति, विष्टपि, मास्व, प्र, उश्मसि, मूर्द्धनि, सद्म,

वरन्त—इत्येतानि च न प्लवन्ते एकादशद्वादशाष्टाक्षरेषु पादेषु। यथा—गर्भं दधासि जामिषु विवक्षसे ( १०।२१।८ )।

प्रदिवि वरुण तमसि तिरसि
घृतमिव दिवि मम हि नु विशः।
उषसि पृथिवि रजसि वहसि
हनति पितरि वि विहि नि मधु ॥२८॥

प्रदिवि, वरुण, तमसि, तिरसि, घृतमिव, दिवि, मम, हि, नु विशः, उषसि, पृथिवि, रजसि, वहसि, हनति, पितरि, वि, विहि, नि, मधु—इत्येतानि च न प्लवन्ते एकादशद्वादशाष्टाक्षरेषु पादेषु। इन्द्रं सोमासः प्रदिवि सुतासः ( ऋ० ३।४६।४ )।

सहस्राणि श्रोमतेनासनाम
छायामिवेषण्यसि सस्तु पाहि।
गोपीथ्याय पवमानो वसन्तान्
सख्याय वोचेमहि मानुषस्य ॥२९॥

सहस्राणि, श्रोमतेन, असनाम, छायामिव, इषण्यसि, सस्तु, पाहि, गोपीथ्याय, पवमान, उ वसन्तान्, सख्याय, वोचेमहि, मानुषस्य—इत्येतानि च न प्लवन्ते—एकादशद्वादशाष्टाक्षरेषु पादेषु। यथा—त्वं पुरु सहस्राणि शतेन ( ऋ० ८।५०।८ )।

आव्य भूमेति पादान्तौ व्यञ्जनेषु श्रुधी हवम्।
सद्मा होता स्मा सनेमि धर्म्मा सं भूषता रथः ॥३०॥

आव्य, भूम—इत्येतौ पादान्तौ व्यञ्जनेषु परभूतेषु प्लवेते। यथा—

श्रुष्टिमाव्या साकम् ( ऋ° १।१६६।१३ ), वृजनं न भूमा भर्त्ति ( ऋ° १।१७३।६ )।

'श्रुधि' इत्यस्य अन्तः 'हवम्' इत्येतस्मिन् परतः प्लवते। यथा— इमं मे वरुण श्रुधी हवम् ( ऋ° १।२५।१९ )।

सद्मा होता ( ऋ° ४।१।८ ), रथा सनेमि ( ऋ° ४।१०।७ ), धर्म्मा सम् ( ऋ° ३।१७।१ ), भूषता रथः ( ऋ° १।१८२।१ ) इत्येतेषां पूर्वपदान्ताः प्लवन्ते।

## नवमं पटलम्।

सर्व्वत्र पूर्व्वपदान्ताः प्लवन्ते
वसुमघयोः परयो रवे तुवि।
विश्व विभु धन्व रथर्त्ति शत्रु
द्युम्न यज्ञेति सहतौ प्र चाप्लुते ॥१॥

'वसु' 'मघ' इत्येतयोः परयोः सतोः पूर्व्वपदान्ताः प्लवन्ते इत्यर्थः। यथा—पुरूवसुर्हि मघवन् ( ऋ° ७।३२।२४ ), तुवि देष्णां तुवीमघम् ( ऋ° ८।८१।२ )।

रवे परतः तुवि इत्ययं पूर्वपदान्तः प्लवते। यथा—स इद्दासं तुवीरवम् ( ऋ° १०।९९।६ )।

विश्व, विभु, धन्व, रथ, ऋति, शत्रु, द्युम्न, यज्ञ इत्येते पूर्वपदान्ताः सहतौ परतः प्लवन्ते। यथा—विश्वासाहमवसे ( ऋ° ३।४७।५ ), विश्वासाहं रयिम् ( ऋ° ५।१०।७ )।

प्र इत्येवं च पूर्वपदान्तः प्लवते अप्लुते सहधातौ परभूते। यथा—

प्रासहस्पति स्तुविषान् (ऋ० १०।७४।६)। अप्लुते इति किम्—मत्सरासो जहृषन्त प्रसाहम् ( ऋ० ६।१७।४ )।

सहप्रवादा उदयास्तमान्ताः
पर्य्यभ्यपापीति वृतावृवर्णे ।
अभीवर्त्तः सुयवसो रथीतमः
पुरूतमोऽनन्तरर्द्धर्च उत्तमः ॥ २ ॥

तमान्ताः उदयाः वसु, मघ, रत्र, महति, वृति, वर्त्त, यवस, तम इत्येते इत्यर्थः सहप्रवादाः रूपभेदैः सह गृहीतव्या इत्यर्थः।

परि, अभि, अप, अपि इत्येते च पूर्वपदान्ताः प्लवन्ते ऋवर्णयुक्ते वृतो परतः। यथा—तमसा परीवृतम् ( ऋ० १०।११३।६ ), अभीवृतं कृशनैः ( ऋ० १।३५।४ )। ऋवर्ण इति किम्—अपवर्त्तासि गोनाम् ( ऋ० ४।२०।८ )।

अभीवर्त्तः, सूयवसः, रथीतमः, पुरूतमः इत्येतेषां च पूर्वपदान्ताः प्लवन्ते। उत्तमस्तु पुरूतमः इति यावत् अर्द्धर्चस्य आदौ अन्ते वा वर्त्तमानः सन् प्लवते। यथा—अभीवर्त्तेन हविषा (ऋ० १०।१७४।१), पुरूतमं पुरूणाम् ( ऋ० ६।४५।२९ ), अध्वराणां पुरूतमम् ( ऋ० ८।१०२।७ )। अनर्द्धर्च इति किम्—मरुतां पुरुतममपूर्व्यम् (५।५६।५)।

कवर्दु धान्य मिथु चर्षणि स्तन
पिबेति सर्व्वत्र यथोदयं च ।
त्विष्युक्थेत्येता उदये मकारे
पर्य्युर्वचेत्यमकारेऽनुनामिकी ॥ ३ ॥

कव, ऋदु, धान्य, मिथु, चर्षणि, स्तन, पिब—इत्येतेषा-

मन्त्याचराणि प्लवन्ते यथोदयं यस्मिन् कस्मिन् वा शब्दे परभूते सति। यथा—'मघवा यः कवासखः (ऋं ५।३४।३), ऋदूपे चित् (ऋं ८।७७।६), बीजमिव धान्याकृतः (ऋं १०।८४।१३)।

मकारे परभूते तिषि, उक्थ इत्येतयोरन्त्याचरे प्लवेते। यथा—त्विषीमन्तः (ऋं ६।६६।१०), उक्था मदानि (ऐ. ब्रा. २।३८)।

परि, उरु, अच्च इत्येतेषामन्त्याचराणि प्लवन्ते मकारं वर्जयित्वा अनुनासिके परतः। यथा—परीणहं (ऋं १।३३।८), ऊरूणामा वसुत्पा (ऋं १०।१४।१२), अच्चानहान (ऋं १०।५३।७)। अमकार इति किम्—विप्रासः परिमामृशुः (ऋं ८।८।३)।

पित्र्य माहिनाक्रूषि भङ्गुराश्व
विश्वदेव्य भेषज तुग्र्य पस्त्य।
सुम्नर्तारातीत्युदये वकारे
वैभ्रादयश्च पृशनादयस्तु ॥४॥

वकारे परतः पित्र्य, माहिन, अक्रूषि, भङ्गुर, अश्व, विश्वदेव्य, भेषज, तुग्र्य, पस्त्य, सुम्न, ऋत, अराति इत्येतेषामन्त्याचराणि प्लवन्ते। यथा—पित्र्यावतो (ऋं ८।४६।२), माहिनावान् (ऋं ३।५६।३), अक्रूषीवन्तम् (ऋं १०।१४६।६)।

वैभ्रादयो ये सप्तमश्लोके (८।७) निर्दिष्टास्तेषां पूर्वपदान्ताः प्लवन्ते वकारे परतः।

पृशनादयो ये षष्ठश्लोके (८।६) निर्दिष्टास्तेषां पूर्वपदान्ताः प्लवन्ते यकारे परतः।

यकारेऽराति कविसुक्रतु श्रुधि
पितु सुम्न रथ्याताश्वेति चैते।

न त्वश्व सुम्नर्त वृषेति पद्या
एकाक्षराद्वा उदये यकारे ॥ ५ ॥

यकारे परभूते अराति, कवि, सुक्रतु, अघि, पितु, सुम्न, रयि, ऋत, अश्व— इत्येतेषाम् अन्त्याक्षराणि प्लवन्ते। यथा—अरातीयतः ( ऋ° १।९९।१), कवीयमानः (ऋ° १।१६४।१८), सुक्रतूयया (ऋ° १।१६०।४)।

अश्व, सुम्न, ऋत, वृष इत्येतेषां पदपूर्वाङ्गभूतानामन्त्याक्षराणि न प्लवन्ते एकाक्षरादौ यकारे उदये परभूते सति। यथा—अश्वयुः (ऋ° १।५१।१४ ), सुम्नयुः ( ऋ° २।३०।११ ), ऋतयुः (ऋ° ८।७०।१०), वृषयुः ( ऋ° ८।७८।५ )। एकाक्षरादौ इति किम्—अश्वायन्तः ( ऋ° १०।१६०।५ )।

पृश्नाजिरर्जु मधु पृत्ति जनि
क्रतु वल्गु वन्धुर वृकाङ्कु दम ।
वृजीनाध्वरीषु वृष मध्य सखि
स्तभु दुच्छुनाघ यवि शत्रु वसु ॥ ६ ॥

एते तावत् चतुर्थश्लोके (८।४) सूचिताः पृश्नादयः। तथाच—पृश्न, अजिर, ऋजु, मधु, पृत्ति, जनि, क्रतु, वल्गु, वन्धुर, वृक, अङ्कु, दम, वृजिन, अध्वरि, इषु, वृष, मध्य, सखि, स्तभु, दुच्छुन, अघ, यवि, शत्रु, वसु—इत्येतेषाम् अन्त्याक्षराणि प्लवन्ते यकारे परभूते इति पूर्वेण अन्वयः। यथा—पृश्नायुवः ( ऋ° १।८४।११ ), अजिरायते ( ऋ° ८।१४।१० ), ऋजूयन्तम् ( ऋ° १।१३६।५ )।

वैभु क्रादुनि पुष्ट पर्वताहुति
शुभ्र हृदयामति सह वृषाग्र शक्ति ।

सप्ति स्वधिति क्रशन वयुनर्णा
घृणि ह्वित धित विषु सुतर्त्विय नौथ ॥ ७

एते ते वभ्र्वादयो ये चतुर्थश्लोके ( ८।४ ) सूचिताः। तथाच-- वभ्रु, क्रतुनि, पुष्ट, पर्व्वत, आहुति, शुभ्र, हृदय, अमति, सह, वृष्णाय, शक्ति, सप्ति, स्वधिति, क्रशन, वयुन, ऋण, घृणि, ह्वित, धित, विषु, सुत, ऋत्विय, नौथ इत्येतेषामन्त्याक्षराणि प्लवन्ते वकारे परभूते इति पूर्वेणान्वयः। यथा—वभ्रूवसः ( ऋ १०।४६।३ ), क्रतुनो वृतः ( ऋ ५।५४।२ ), पुष्टावन्तः ( ऋ ८।४५।१६ )।

नार्तवाकेनाश्ववित् सुम्नयन्ता
वसुवसु प्रसहानोऽभिवावृते।
परिवृतं नाभिवृत्याश्ववच्च
पादान्ते सर्व्वत्र परे मघस्य ॥८॥

ऋतवाकेन, अश्ववित्, सुम्नयन्ता, वसुवसु, प्रसहानः, अभिवावृते, परिवृतनं, अभिवृत्य इत्येतेषां पूर्वपदान्ताः न प्लवन्ते।

पादान्ते 'अश्ववत्' इत्येतस्य पूर्वपदान्तो न प्लवते। यथा—दधानो गोमदश्ववत् ( ऋ ८।४६।५ )। पादान्ते इति किम्—अश्वावद् गोमद्यवमत् ( ऋ ८।८२।३ )।

'सर्वत्र वसुमघयोः परयोः' ( ८।१ ) इति यदुक्तं तत्रेदमुच्यते यत् 'मघस्य' इति षष्ठ्यन्ते मघशब्दे परभूते पूर्वपदान्तो न प्लवते। यथा—तुविमघस्य दानम् ( ऋ ५।३३।६ )। षष्ठ्यन्तादन्यत्र तु प्लवत एव। यथा—श्रुधि चित्रा मघे हवम् ( ऋ १।४८।१० )।

अश्वयूपायाश्वयूजोऽश्वयोगाः
सहवाहः सुम्नयन्तर्तयन्त ।
सहवसुं सहवत्सर्तयुक्तिं
सहवीरं वयुनवच्चकार ॥९॥

अश्वयूपाय, अश्वयुजः, अश्वयोगाः, सहवाहः, सुम्नयन्त, ऋतयन्त, सहवसुम्, सहवत्सा, ऋतयुक्तिम्, सहवीरम्, वयुनवत् चकार इत्येतेषां पूर्वपदान्ता न प्लवन्ते ।

सुम्नायुर्जुह्व ऋतायन्नृतायुम्
उग्रादेवं दक्षिणावान्नृतायोः ।
वृषारवाय सूमयं शताव-
न्नपीजुवा परीवृतोऽनपावृत् ॥१०॥

सुम्नायुर्जुह्वे ( ऋ॰ ६।२।३ ), ऋतायन्, ऋतायुम्, उग्रादेवम्, दक्षिणावान्, ऋतायोः, वृषारवाय, सूमयम्, शतावन्, अपीजुवा, अपरीवृतः, अनपावृत्, इत्येतेषां पूर्वपदान्ताः प्लवन्ते । सुम्नायुर्जुह्वे इति किम्—देवान् जिगाति सुम्नयुः ( ऋ॰ ३।२७।१ ) ।

इन्द्रावतः सोमावतीमवायती
दीर्घाधियोऽमितायुधो रथीतरः ।
अन्नावृधं विश्वापुषं वसूजुवं
विश्वाभुवे यज्ञायते घृतावृधा ॥११॥

इन्द्रावतः, सोमावतीम्, अवायती, दीर्घाधियः, अमित्रायुधः, रथीतरः, अन्नावृधं, विश्वापुषम्, वसूजुवम्, विश्वाभुवे, यज्ञायते, घृतावृधा इत्येतेषां पूर्वपदान्ताः प्लवन्ते ।

सुम्नायन्निन्मित्रायुव ऋषीवो देवावान्दिवः ।
एवावदस्य चेत्रासामृतावे सदानसदे ॥ १२ ॥

सुम्नायन्नित्, मित्रायुवः, ऋषीवः, देवावान् दिवः ( ऋ० ४।२६।६ ), एवावदस्य, चेत्रासाम्, ऋतावने, सदनासदे इत्येतेषां पूर्वपदान्ताः प्लवन्ते । देवावान् दिव इति किम्—देववानिति ( ऋ० १०।६१।२६ ) । दिवः इत्यस्य परतोऽनवस्थानान्न दीर्घः ।

पदेष्वन्तरनिङ्ग्येषु प्लुतिः पद्येषु चोत्तरा ।
वृषस्व वन्य वृध्वांसं वाता वातुर्वनो वृतुः ॥ १३ ॥

अनिङ्ग्येषु अनवग्रहेषु पदेषु, पद्येषु अवग्रहयुक्तपदावयवेषु च अन्तः पदमध्ये एव उत्तरा उत्तरत्र वक्ष्यमाणा प्लुति र्भवति । पूर्वपदान्ताधिकारनिवृत्तिः ।

वृते वृषाणा वृषाणो वृजे वव्रि मृजुर्मृशुः ।
मृजे मृजीत वानैषां व मेति सदृशादिषु ॥ १४ ॥

वकारमकारौ प्लवेते वृषस्व, वन्य, वृध्वांसम्, वाता, वातु, वनः, वृतुः, वृते, वृषाणा, वृषाणः, वृजे, वव्रि, मृजु, मृशु, मृजे मृजीत, वान,—इत्येतेषामुदयानां सदृशादिषु उदयेषु । वकारस्य वकारादिषु उदयेषु मकारस्य च मकारादिषु प्लुतिर्भवतीत्यर्थः । यथा—उद्वावृषस्व ( ऋ० ८।६१।७ ), यद्वावन्य ( ऋ० ८।६६।५ ), वावृध्वांसं चिदद्रिवः ( ऋ० ८।६८।८ ) । अन्तरनिङ्ग्येषु इति किम्—

देववाता जरेत ( ऋ॰ ४।३।१५ )। अत्र देव इत्यस्य पूर्वपदान्तत्वात् न प्लुतिः।

सहेत्यादिः पूर्वपदोपधः सन्
एकाक्षरचर्षणिधन्ववर्जम्।
न तु पादस्याष्टिनोऽन्तं गतस्य
न द्वादशिनोऽनभिमातिपूर्वः॥ १५ ॥

'सह' इत्यादिः पूर्वपदोपधः सन् प्लवते, एकाक्षरं पूर्वपदं चर्षणि, धन्व इत्येते च पूर्वपदे वर्जयित्वा। यथा,—विश्वासाहमवसे ( ऋ॰ ३।४७।५ ), शत्रूषाहः स्वग्नयः (ऋ॰ ८।६०।६)। एकाक्षरेत्यादि कथम्—प्रासह सम्राट् सहुरिम् ( ऋ॰ ८।४६।२० ), गाव चर्षणीसहम् ( ऋ॰ ८।१।२ ), धन्वासहा नायते ( ऋ॰ १ १२७।३ )।

अष्टाक्षरस्य पादस्य अन्तङ्गतस्य 'सह' इत्यस्य आदिः न प्लवते। यथा,—तं वो दस्ममृतीषहम् ( ऋ॰ ८।८८।१ )।

द्वादशाक्षरस्य पादस्य अन्ते वर्त्तमानस्य उत्तरपदस्य सहतेरादिः न प्लवते, अनभिमातिपूर्वः सन् 'अभिमाति' इत्येतत् पूर्वं यस्य न वर्त्तते इत्येवंभूतस्य सहतेरादिरित्यर्थः। यथा—सत्रासाहो जनभक्षो जनं सहः ( ऋ॰ २।२१ ३ )। अनभिमातिपूर्व इति कथम्—ऋतमृषिमुग्रमभिमातिषाहम् ( ऋ॰ १०।४७ ३ )।

अभिमातिनृपृतनोपधस्तु
सर्व्वत्र परे प्लवते यकारे।
आवयादीनामुदयास्त्रिवर्णाः
पदैकदेशा इति तान् प्रतीयात्॥१६॥

अभिमाति, नृ, पृतना—इत्येतानि उपधाभूतानि यस्य तादृशस्य 'सह' इत्यस्य आदिः प्लवते यकारे परभूते सर्वत्र पादस्यान्ते आदौ मध्ये वा इत्यर्थः। यथा—इन्द्राभिमातिषाह्ये ( ऋ॰ ३।३७।३ ), नृषाह्ये ( ऋ॰ १।१००।५ ), पृतनाषाह्याय च ( ऋ॰ ३।३७।१ )।

आवयादीनामुदयाः आवयादिरूपा उदयाः उत्तरत्र वक्ष्यमाणाः त्रिवर्णा एव ग्रहीतव्याः पदैवादेशाः सन्तः। तस्मात् 'आवय' इति गृहीते 'आश्रावयन्त इव' (ऋ॰ १।१३८।३) इत्यत्रापि भवति प्लुतिः इत्यर्थः।

**आवय यावय च्यावय यामय रामय मामह वावस।**
**द्रावय दादृह वावृध तातृष सासह रारप ॥ १७ ॥**

**आद्यक्षरं प्लुतं तेषाम् अनन्वित्यस्य मध्यमम्।**
**द्विवर्णः प्रत्ययोऽन्त्यस्य प्रवादाः षलितः परे ॥१८॥**

आवय, यावय, च्यावय, यामय, रामय, मामह, वावस, द्रावय, दादृह, वावृध, तातृष, सासह, रारप—इत्येतेषामाद्यमक्षरं प्लुतं भवति। यथा—आवया वाचम् ( ऋ॰ ८।८६।१२ ), आश्रावयन्त इव ( ऋ॰ १।१३८।३ ), यावया वृक्यम् ( ऋ॰ १०।१२७।६ )।

'अननु' इत्येतस्य मध्यममक्षरं प्लुतं भवति। यथा—अनानुदो वृषभो जग्मिः ( ऋ॰ २।२५।११ )।

तेषां 'आवय' प्रभृतीनाम् अन्त्यस्य 'रारप' इत्येतस्य इति यावत् द्विवर्णः अपि प्रत्ययः प्रतीतिः स्यात्। तथाच 'रार' इत्यत्रापि भागे प्लुतिर्भवतीत्यर्थः। यथा—सोम रारन्धि नो हृदि ( ऋ॰ १।९१।१३ )।

इतः परं ये वक्ष्यन्ते ते दूणाश इत्यादय इति यावत् प्रवादाः रूपभेदैर्युक्ता इत्यर्थः। ते च षडेव इति वेदितव्यम्।

**दूणाश उक्थशासश्चेकारान्तश्च दाधृषिः।**
**पादान्तेऽपद्यः सादनमङ्गे चान्ते तु पूरुषः ॥ १९॥**

दूणाश इतरयं प्लवते। यथा,—दूणाशं सख्यं तव (ऋ' ६।४५।२६), दूणाशेयं दक्षिणा ( ऋ' ६।२७।८ )।

उक्थशास इतरयं प्लवते। यथा,—सामगामुक्थशासम् ( ऋ' १०।१०७।६ )।

'दाधृषि' इतरयं प्लवते इकारान्तः सन्। यथा,—ब्रह्मणा यामि सवनेषु दाधृषिः ( ऋ' २।१६।७ )। इकारान्त इति किम्—वाजेषु दधृषं कवे ( ऋ' ३।४२।६ )।

पादान्ते वर्त्तमानः 'सादनम्' इति प्लवते, अपद्यः सन्। यथा —द्य क्षं मित्रस्य सादनम् ( ऋ' १।१३६।२ )। पादान्त इति किम्— योनिष्ट इन्द्र सदने अकारि ( ऋ' ७।२४।१ )। अपद्य इति किम्—रणवा नरो नृषदने ( ऋ' ५।७।२ )।

'पुरुष' इतरयं तु अर्द्धर्चान्ते वर्त्तमानः सन् प्लवते। यथा—विराजो अधि पूरुषः ( ऋ' १०।९०।५ )। अर्द्धर्चान्ते इति किम्—सहस्रशीर्षा पुरुषः ( ऋ' १०।९०।१ )।

दोषामस्मै राजतोऽक्रन्वनस्पतीन्
महीयमानां कति तुभ्यमेभ्यः।
उषासमितुरत्तरं सर्व्वदेश्यं
पादस्य चैकादशिनो यदन्ते ॥ २० ॥

दोषाम्, अस्मै, राजतः, अक्रन्, वनस्पतीन्, महीयमानां, कति, तुभ्यम्, एभ्य उत्तरम् 'उषासम्' इति प्लवते सर्वदेश्यम् सर्वत्र इत्यर्थः। यथा—दोषामुषासमीमहे ( ऋ' ५।५।६ ), अस्मा उषास आ ( ऋ' ८।९६।१ ), राजत उषासा वेह ( ऋ' १।१८८।६ ), अक्रन्नुषासो वयुनानि ( ऋ' १।९२।२ )।

एकादशाक्षरस्य पादस्य अन्ते वर्त्तमानं यत् 'उषासम्' इति

तच्च प्लवते। यथा—रेवदुच्छन्तु सुदिना उषासः ( ऋ॑ १।१२४।६ )। एकादशिन इति किम्—अग्ने विवस्वदुषसः ( ऋ॑ १।४४।१ )। अन्त इति किम्—अग्रे बृहन्नुषसामूर्ध्वो अस्थात् ( ऋ॑ १०।१।१ )।

यवयुररमयः ससाहिषि

वव्रधन्तो रमया गिरा ररभ्म।

यवयसि तत्पषाणमोषति

अवयन्तोऽदद्दहन्त ते नृषह्ये ॥ २१ ॥

यवयुः, अरमयः, ससाहिषे, वव्रधन्तः, रमया गिरा, ररभ्म, यवयसि, तत्पषाणमोषति, अवयन्तः, अदद्दहन्तः, ते नृषह्ये इत्येतानि न प्लवन्ते। यथा—त्वामिद् यवयुर्मम ( ऋ॑ ८।७८।९ ), अरमयः सरपसस्तराय कम् ( ऋ॑ २।१३।१२ ), प्र ससाहिषे पुरुहूतः ( ऋ॑ १०।१८०।१ ), नमस्या रमया गिरा ( ऋ॑ ५।५२।१३ )।

अवयतं वाजसातौ नृषह्ये

विभ्वासहं दूणाशा रोचनानि।

न तत्पषाणो यमयो ररपशे

पुरुषीणां यवयन्त्विन्दवश्च ॥ २२ ॥

अवयतं, वाजसातौ नृषह्ये ( ऋ॑ ८।८७।१८ ), विभ्वासहं, दूणाशा रोचनानि ( ऋ॑ ३।५६।८ ), न तत्पषाणः, यमयोः, ररपशे, पुरुषीणाम्, यवयन्त्विन्दवः ( ऋ॑ ८।४८।५ ) इत्येतानि च न प्लवन्ते।

ररच्च यवय स्तेनं ससाहे यवया वधम्।

परमया द्रवयन्त अवयन् ररते च न ॥ २३ ॥

ररक्ष, यवय स्तेनं (ऋ० १०।१२७।६), ससाहे, यवया वधम् (ऋ० १०।१५२।५), परमया, द्रवयन्त, अवयन्, ररते इत्येतानि च न प्लवन्ते ।

साह्वांसो वः सत्रासाहं सादन्यं सतां तातान ।

नानाम श्रुयाः शुश्रूया रीषन्त गातूयन्तीव ॥२४॥

साह्वासः, वः सत्रासाहम् (ऋ० ८।८२।७), सादन्यम्, सत्यन्तातान (ऋ० १।१०५।१२), नानाम, श्रूयाः, शुश्रूयाः, रीषन्त, गातुयन्तीव (ऋ० १।१६८।५) इत्येतानि च प्लवन्ते ।

वावर्त्त येषां रीषतोऽदकारे

सान्त्यभि नृषाहमपूरुषघ्नः ।

सान्ति गुहा तन्वं रीरिषीष्ट

जानि पूर्व्योऽभीवृतेव अथाय ॥ २५ ॥

वावर्त्त येषाम् (ऋ० १०।८३।१३), दकारे परभूते असति रीषत इत्येतत्, सान्त्यभि, नृषाहम्, अपूरुषघ्नः, सान्ति गुहा (ऋ० ८।८।२३), तन्वं रीरिषिष्ट, (ऋ० ६।५१।७), जानि पूर्व्यः (ऋ० ८।७।३६), अभीवृतेव, अथाय—इत्येतानि प्लवन्ते । अदकारे इति किम्—प्रति ष्म रिषतो दह (ऋ० १।१२।५) ।

साहन्त साहा जर्हृषन्त प्रसाहं

नक्तोषासा सूर्य्यमुषासमग्निम् ।

परिरापः सूनृते जारयन्ती

शुश्रूयातं यूयुविः सादना ते ॥ २६ ॥

क्रमसंज्ञो भवति। तथाच संहिता—पर्जन्याय प्र गायत दिवस्पुत्राय मील्हुषे ( ऋ॰ ७।१०२।१ ) इत: क्रम:—'पर्जन्याय प्र। प्र गायत। गायत दिव:। दिवस्पुत्राय। पुत्राय मील्हुषे। मील्हुषे इति मील्हुषे।'

एकवर्णमनोकारं नते सुष्मेति न:परे।
पदेन च व्यवेतं यत् पदं तच्च व्यवायि च ॥२॥
ईं लुप्तान्तं प्लुतादीनि स्कम्भनेनेति लुप्तवत्।
इतो षिञ्चतावर्त्तम: पूर्व्वं द्वे पदयोर्द्वयो: ॥३॥
स्वसारमस्कृतेतुभे परं वीरास एतन।
अतीतैरतान्यवस्यन्ति प्लुतादिप्रभृतीनि च ॥ ४ ॥

क्रमपाठे एतानि एकवर्णादीनि अतीत्य अप्रत्यादाय अपुनर्ग्रहीत्वा इति यावत् अवस्यन्ति अर्द्धर्चं समापयन्ति। एकवर्णादीनीदानीं सोदाहरणं व्याक्रियन्ते।

( १ ) अनोकारम् ओकारं वर्जयित्वा एकवर्णं पदम् आ उँ इत्येते इति यावत्। यथा—आ मन्द्रम् आ वरेण्यम् (ऋ॰ ८।६५।२८) इति संहितात: 'आमन्द्रम्। मन्द्रम् आ: वरेण्यम्' इति क्रमो भवति। न च 'आ' इत्येतस्य पुनर्ग्रहणं भवति।

(२) नते षत्वमापन्ने इति यावत् न:परे 'न:' इति परभूतं ययो: पदयो: ते तथाभूते 'सु, स्म' इति पदे। यथा—मो षु ण: ( ऋ॰ १।३८।६ ) इति संहितात: क्रम: 'मो षु ण:' इत्येव।

(३) पदेन च व्यवेतं यत् पदम्, यच्च पदं व्यवैति इत्येते उभे अतीत्य अवस्यन्ति। 'ईयते नरा च शंसं दैव्यम्' ( ऋ॰ ८।८६।४२ ) इत्यत: क्रम: 'ईयते नरा च शंसं दैव्यम्' इत्येव।

(४) लुप्तान्तम् लुप्तः अन्तो यस्य तथाभूतम् 'ईम्' इति पदम् अतोल्य अवस्यन्ति इत्यर्थः। यथा—यम् ई गर्भम् ( ऋ० ८।१०२।६ ) इत्यतः क्रमः 'यम् ई गर्भम्' इत्येव। लुप्तान्तमिति किम्—सम् ईँ रेभासः (ऋ० ८।८७।११) ; इतः क्रमः 'सम् ई' | ई रेभासः इति।

(५) प्लुतादीनि पदानि च अतोल्य अवस्यन्ति। यथा—योनिमारैगप ( ऋ० १।१२४।८ ) इत्यतः क्रमः 'योनिमारैगप' इत्येव।

(६) लुप्तवत् लोपयुक्तम् लुप्ताद्यसकारमिति यावत् 'स्कम्भनेन' इति पदम् अतोल्य अवस्यन्ति। यथा—चित् कम्भनेन स्कभीयान् ( ऋ० १०।१११।५ ) इत्यतः क्रमः 'चित् कम्भनेन स्कभीयान्' इत्येव।

(७) 'इतोषिच्चत' 'आवर्तमः' इत्येतयोर्द्वयोः पदयोः पूर्वं पदे अतोल्य अवस्यन्ति। यथा—परोतोषिच्चत ( ऋ० ८।१०७।१ ) इत्यतः क्रमः 'परोतोषिच्चत' इत्येव। 'उषा आवर्तमः' ( ऋ० १।८२।४ ) इत्यतः क्रमः 'उषा आवर्तमः' इत्येव।

(८) स्वमारम्, अस्कृत इत्येते पदे अतोल्य अवस्यन्ति। यथा—'निरु स्वसारमस्कृतोषसम्' ( ऋ० १०।१२७।३ ) इत्यतः क्रमः 'निरु स्वसारमस्कृतोषसम्' इत्येव।

(९) 'वीरास एतन' इत्येतस्य द्वैपदस्य परं पदम् 'एतन' इति यावत् अतोल्य अवस्यन्ति। यथा—'परा वीरास एतन मर्य्यासः' ( ऋ० ५।६१।४ ) इत्यतः क्रमः 'परा वीरासः। वीरास एतन मर्य्यासः'।

प्लुतादिप्रभृतीनि चेति चकारो वा-शब्दस्यार्थे। तथाच—प्लुतादिप्रभृतीनि वा अतोल्य अवस्यन्ति। यथा—योनिमारैक्। चित्कम्भनेन। वीरास एतन। परोतः। न तु योनिमारैगप इति पूर्वनिर्दिष्टः क्रमपर्य्यायः एव।

**पूर्व्वोत्तरकृतं रूपं प्रत्यादानावसानयोः।**

**न ब्रूयात् सर्वमेवान्यद् यथासंहितमाचरेत् ॥ ५ ॥**

पूर्वक्रतं पूर्वाक्षरजन्यं रूपं प्रत्यादाने क्रमपाठे पुनर्ग्रहणे न ब्रूयात्। उत्तरक्रतम् परवर्त्तिपदादिजन्यं रूपम् अवसाने न ब्रूयात्। पूर्वक्रतं रूपं यथा—यच्छक्करीषु बृहता' ( ऋ' ७।३३।४ ) इति संहितातः 'यच्छक्करीषु। शक्करीषु बृहता' इति क्रमः। न चात्र प्रत्यादानवेलायां पूर्वचकारजन्यश्छकार उच्यते, अपि तु मूलभूतः शकार एव। तथाच शक्करीषु बृहता इति न तु छक्करीषु बृहता। उत्तरक्रतं यथा—अग्ने अच्छा वद ( ऋ' १०।१४१।१ ) इत्यतः 'अग्ने अच्छ। अच्छा वद' इति क्रमः। अत्र च परभूत'वद'पदजन्यम् 'अच्छ' इत्येतस्य दीर्घत्वम्। न च तत् 'अग्नेअच्छ' इति अवसाने प्रयुज्यते।

पूर्वक्रतादुत्तरक्रताच्च रूपाद् यदन्यत् तत् सर्वं यथासंहितम् आचरेत्—यथा संहिताविधाने विहितं तथैवाचरेदित्यर्थः। यथा—वाजेषु सासहिर्भव ( ऋ' ३।३७।६ ) इत्यतः क्रमः 'वाजेषु सासहिः। सासहिर्भव' इति।

**अवगृह्याण्यतिक्रम्य सहेतिकरणानि च।**
**धन्विधुन्विप्रवादौ च विकृतादौ प्लुतादि च॥ ६॥**

**अन्तःपदं च येषां स्याद् विकारोऽनन्यकारितः।**
**एतानि परिगृह्णीयाद् बहुमध्यगतानि च॥ ७॥**

अवगृह्याणि द्विःखण्डानि पदानि अतीत्य परिगृह्णीयात्। यथा—ऋषिऽभिरीड्यः ( ऋ' १।१।२ ) इत्यतः क्रमे 'ऋषिभिरीड्यः। ऋषिभिरित्यृषिऽभिः' इत्येवं परिग्रहः।

इतिकरणसहितानि पदपाठे इति शेषः च पदानि अतिक्रम्य परिगृह्णीयात्। यथा—'इन्द्राग्नी अपात्' ( ऋ' ६।५९।६ ) इत्यतः क्रमे 'इन्द्राग्नी अपात्। इन्द्राग्नी इतीन्द्राग्नी' इत्येवं परिग्रहः।

धक्षि, धुक्षि इत्येतौ च प्रवादौ विकृतादौ अतिक्रम्य परिगृह्णीयात्। यथा—अनु दक्षि दावने ( ऋ' २।१।१० ) इत्यत: क्रमे 'अनु दक्षि। दक्षि दावने। धक्षीति धक्षि' इत्येवं परिग्रह:।

प्लुतादि च पदम् अतिक्रम्य परिगृह्णीयात्। यथा—आरैक् पन्थाम् ( ऋ' १।११३।१६ ), इत्यत: क्रमे 'आरैक् पन्थाम्। आरैगित्यारैक्।'

येषां पदानामन्तर्मध्ये अनन्यकारित: पदान्तराजन्य: आत्मकारित इत्यर्थ: विकार: स्यात् तानि पदानि च अतीत्य परिगृह्णीयात्। यथा—वाव्रधाना शुभ: ( ऋ' ८।५।११ ), इत्यतः क्रमे 'वाव्रधानाशुभ:। वव्रधानेति वव्रधाना' इत्येवं परिग्रह:।

बहूनां पदानां मध्यगतानि च यानि पदानि तानि अतिक्रम्य परिगृह्णीयात्। यथा—ईयते नरा च शंसं दैव्यम् ( ऋ' ८।८६।४२ ), इत्यतः क्रमे 'ईयते नरा च शंसं दैव्यम्। नराशंसम् इति नराऽशंसम्। चेति च।'

## अर्द्धर्चान्त्यं च नाकारं प्रागतोऽननुनासिकम्।
## प्रत्यादायैव तं ब्रूयादुत्तरेण पुन: सह ॥ ८ ॥

अर्द्धर्चस्य अन्ते वर्त्तमानं पदम् अतीत्य परिगृह्णीयात्। यथा—'पुत्राय मोळ्हुषे' ( ऋ' ७।१०२।१ ) इत्यत: क्रमे 'पुत्राय मोळ्हुषे। 'मोळ्हुषे इति मोळ्हुषे' इत्येवं परिग्रहः।

अननुनासिकम् आकारम् अत: अर्द्धर्चान्तात् प्राक् अर्द्धर्चान्तादन्यत्र इत्यर्थ: न परिगृह्णीयात्। यथा—आमन्द्रमा वरेण्यम् (ऋ' ८।६५।२९) इत्यत: क्रमः 'आ मन्द्रम्। मन्द्रम् आ वरेण्यम्।' अर्द्धर्चान्ते तु 'तनुष्वा। एत्या' ( ऋ' ८।६५।३० )।

तम् अननुनासिकम् आकारं प्रत्यादाय पुन: उत्तरेण परभूतेन पदेन सह ब्रूयात्। यथा—मन्द्रम् आ वरेण्यम् ( ऋ' ८।६५।२९ ), इत्यत: क्रमे 'मन्द्रम् आ वरेण्यम्। आ वरेण्यम्' इतीत्थं भवति।

**उपस्थितं सेतिकरणं केवलं तु पदं स्थितम् ।**
**तत्स्थितोपस्थितं नाम यत्रोभे आह संहिते ॥ ९ ॥**

इतिकरणयुक्तं पदम् उपस्थितसंज्ञं वेदितव्यम्। यथा—'बाह्व इति'।

केवलं तु पदम् इतिकरणरहितं पदम् इति यावत् स्थितसंज्ञं वेदितव्यम्।

यत्र वक्ता उभे स्थितोपस्थिते संहिते मिलिते आह तत् स्थितोपस्थितं नाम वेदितव्यम्। यथा—'विभावसो इति विभाऽवसो'।

**अदृष्टवर्णे प्रथमे चोदकः स्यात् प्रदर्शकः ।**
**एतदिष्टं समासांस्तु पुनर्वचन इङ्गयेत् ॥ १० ॥**

क्रमपाठे प्रथमे द्वैपदे पूर्वपदस्यान्ते वर्णे अदृष्टे अस्पष्टे सति चोदकः परिग्रहः तस्य प्रदर्शकः स्यात्। परिग्रहदर्शनेनैव पूर्वपद-स्वरूपप्रतीतिः स्यात् इत्यर्थः। तथाच—तन्नः ( ऋ॰ १।१०७।३ ), इत्यत्र क्रमे 'तन्नः। तदिति तत्' इत्येवं परिग्रहे तदिति पूर्वपदं प्रतीयते।

समासान् अवग्रह्याणि पदानि इति यावत् क्रमपाठे पुनर्वचने परिग्रहस्य द्वितीये वचने इङ्गयेत् अवगृह्णीयात्। यथा—पुरोजितीवः ( ऋ॰ ८।१०१।१ ), इत्यत्र क्रमः 'पुरोजितीवः। पुरोजितीति पुरःऽ-जिती।'

**इतिपूर्वेषु सन्धानं पूर्वैः स्वः स्यादसंहितम् ।**
**तदवग्रहवद् ब्रूयात् सन्धिर्नाङ्गर्चयोर्भवेत् ॥ ११ ॥**

परिग्रहे क्रियमाणे इतिपूर्वेषु 'इतिः' पूर्वो येभ्यस्तेषु इतिना सन्धानं पूर्वैराचार्य्यैरिष्टम्। यथा—इन्द्राग्नी इतीन्द्राग्नी। 'स्वः'

इति पदम् असंहितं स्यात् तच्च अवग्रहवत् ब्रूयात्। यथा—स्वरिति ऽस्वः। असंहितम् इति यथा इतिकरणान्तो निघातं न प्राप्नुयात् स्वरिति प्रतये। अवग्रहवदिति यथा मात्राकालोऽन्तरं स्यात्।

अस्मिन् क्रमविधाने अर्द्धर्चयोः सन्धिर्न भवेत्।

## दृष्टक्रमत्वात् समयान् सन्दध्यात् सर्वशः क्रमे।
## पदेन च पदाभ्यां च प्रागवसोदतीत्य च॥ १२॥

दृष्टक्रमत्वात् हेतोः समयान् सन्दध्यात् सर्वशः सम्पूर्णसमयेन न पदाभ्याम्। क्रमे, न पदकाले। पदेन च। समयं प्राप्य पदेनावस्येत्। समयमतीत्य च पदाभ्यामवस्येत्।

पदपाठे कदाचित् पूर्व्वप्राप्तानां पदानां पुनःप्राप्त्यवसरे पाठप्रदर्शन परित्यागः स परित्यागः समयशब्देन व्यवह्रियते। परित्यक्तानि तानि पदान्यपि तेन शब्देनोच्यन्ते। क्रमपाठे पदपाठदृष्टपदानामिव पर्य्यायस्य वक्तव्यतया समयगतेन पदेन पर्य्यायवचनावसरे समयप्राथमिकेन पदेन पर्य्यायो वक्तव्यः। ततः पूर्णं समयं प्रोच्य उत्तरवर्त्तिपाठदृष्टपदाभ्यां संहितभावेन पर्य्यायो वक्तव्यो भवति। यथा—'प्रप्रवस्त्रिष्टुभम् इषं मन्दद्वीरायेन्दवे' ( ऋ' ८।६९।१ ) इति संहितातः 'प्रऽप्र | वः | मन्दत्ऽवीराय। इन्दवे' इति पदपाठः, 'प्रप्रवः। प्रप्रेति प्रऽप्र। वस्त्रिष्टुभमिषम् मन्दद्वीरायेन्दवे।' इति क्रमः। 'योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत' ( ऋ' ७।२४।१ ) इति संहितातः 'आ | सदने | आ | नृऽभिः | पुरुऽहूत' इति पदपाठः 'योनिष्ट इन्द्र सदने अकारि। अकारि तम् आनृभिः पुरुहूत।' इति क्रमः।

## नकारसरोष्मवद् वृत्तं प्लुतोपाचरिते नतिः।
## प्रश्लेषश्च प्रगृह्यस्य प्रकृत्या स्युः परिग्रहे॥ १३॥

नकारस्य यदूष्मवत् वृत्तं, प्लुतस्य, उपाचरितस्य, नतिस्य, प्रग्टह्यस्य च यः प्रश्लेषः—इत्येतानि सर्वाणि प्रकृतया भवन्ति परिग्रहे क्रियमाणे। क्रमेणोदाहरणानि अभीशूँरिव सारथिः ( ऋ॰ ६।५७।६ ) इत्यत: परिग्रहे 'अभिशून् इवेत्यभीशून्ऽइव'। मक्षू मक्षू कृणुहि ( ऋ॰ ३।३१।२० ) इत्यत: परिग्रहे 'मक्षू मक्ष्विति मक्षुऽमक्षु'। ज्योतिष्कृदसि ( ऋ॰ १।५०।४ ) इत्यत: परिग्रहे 'ज्योतिःकृदिति ज्योतिःऽकृत्'। सुषुमायातम् ( ऋ॰ १।१३८।१ ) इत्यत: परिग्रहः 'सुसुमेति सुसुम'। 'दम्पतीव' 'इत्यत: दम्पती इवेति दम्पतीऽइव' ( ऋ॰ २।३९।२ )।

**शौद्धाक्षरागमोऽप्येति न्यायं यान्त्युत्तरे त्रयः।**

**रिफितान्यूष्माणोऽघोषे दूभावः स्वधितीव च॥ १४॥**

शौद्धाक्षराणां सन्धीनां य आगम उक्तः सः अप्येति परिग्रहे क्रियमाणे। यथा—पुरुश्चन्द्रं यजतम् ( ऋ॰ ५।८।१ ) इत्यत: परिग्रहे 'पुरुचन्द्रमिति पुरुऽचन्द्रम्।'

परिग्रहे क्रियमाणे उत्तरे त्रयः सन्धयः ( ४।४१ ) परतः न्याय्यं यान्ति प्रकृतिं गच्छन्ति इत्यर्थः। यथा—'न जुगुक्षतः' इत्यत: 'जुघुक्षत इति जुघुक्षतः' (ऋ॰ ८।३१।७) ; 'अनुदक्षि' इत्यत: 'धक्षीति धक्षि' (ऋ॰ २।१।१०) ; 'दुक्षन्वृधे' इत्यत: 'धुक्षन् इति धुक्षन्' (ऋ॰ १।१२१।८)।

परिग्रहे क्रियमाणे ऊष्मणः स्थाने अघोषे परतो यानि रिफितानि यश्च दूभावः, स्वधितीव इति पदं च—एतानि सर्वाणि प्रकृतिं गच्छन्ति। यथा—स्वर्चक्षा रथिरः इत्यतः स्वश्चक्षाइति स्वः ऽ चक्षाः ( ऋ॰ ८।८७।४६), दूणाशं सख्यम् इत्यत: दुर्नशम् इति दुःऽनशम् ( ऋ॰ ६।४५।२६ ), स्वधितीव रीयते इत्यतः स्वधितिरिवेति स्वधितिःऽइव ( ऋ॰ ५।७।८ )।

# एकादशं पटलम् ।

अथार्ष्यलोपेन यदाह स क्रमः
　　समानकालं पदसंहितं द्वयोः ।
अथो बहूनामविलोपकारणः
　　परैरवस्यन्त्यतिगम्य कानिचित् ॥ १ ॥

आर्षाः संहितायाः अलोपेन द्वयोः पदयोः पदसंहितम् पदस्य संहिता च तयोः समाहारः तत् समानकालं तुल्यकालं यदाह स क्रमोऽधिकृतो वेदितव्यः ।

परं न केवलं द्वयोः पदयोरेव भवति क्रमः । अपि तु बहूनामपि भवति । स च अविलोपकारणः आर्षा अविलोपार्थम् । अन्यथा द्वयोरेव सति क्रमविधाने कदाचित् आर्षलोपः सम्भाव्येत । तथा च कानिचित् पदानि अतिगम्य अपुनरादाय परैः पदैरवस्यन्ति समापयन्ति क्रममित्यर्थः ।

पटले चात्र पूर्वपटलोदाहृतानां विधानानामेव हेतवो निर्दिश्यन्ते क्रमलक्षणसङ्गमनद्वारेण । तथाच विधानानामितेषामपालने संहिता-लोपे क्रमलक्षणविघातः स्यादिति सर्वत्रोहनीयम् ।

अपृक्तमेकाक्षरमद्वियोनि यत्
　　तदानुनासिक्यभयादतीयते ।
नतं च पूर्वेण परस्य कारणं
　　नतेः परस्योभयहेतुसंग्रहात् ॥ २ ॥

अपृक्तमव्यञ्जनम् एकाक्षरम् अद्वियोनि असन्ध्यक्षरं यत् पदं तद्

आनुनासिक्यभयादतीयते क्रमस्यावसाने न भवति (१०।२)। अवसानभूतत्वे 'अष्टावाद्यानवसाने प्रगृह्यान् आचार्य्या आहुरनुनासिकान् स्वरान्' (१।२६) इति अनुनासिकत्वे संहिताविलोपः स्यात्। उदाहरणानि तु पूर्वपटले एवानुसन्धातव्यानि।

यत् पदं पूर्वेण पदेन हेतुभूतेन नतं मूर्द्धन्यीकृतं, यत् च तथाभूतं नतं पदं परस्य नतिमूर्द्धन्यीभावस्य कारणं तत् पदम् अतीयते अवसाने न भवतीत्यर्थः (१०।२)। किं कारणम्—परस्य मूर्द्धन्यीभावस्य उभयहेतु-संग्रहात् पूर्वभूतस्य पदद्वयस्यैव हेतुत्वात्। तथा च मध्यमस्य क्रमावसानभूतत्वे तृतीयस्य मूर्द्धन्यीभावाभावः संहितालोपश्च प्रसज्येत।

परीत इत्युत्तरमेतयोर्द्वयोः
परं हि पूर्व्वो नमतीत्यतीयते।
ततोऽपरे सन्ध्यमवेच्य कारणं
तदर्थजं द्विक्रममत्र कुर्वते॥ ३॥

'परि', 'इतः' इति द्वयोः पदयोर्मध्ये उत्तरं पदम् 'इतः' इति यावत् अतीयते अवसानीयं न भवतीत्यर्थः (१०।३)। किं कारणम्—पूर्वं 'परि' इति पदं परं पदम् अनवसानीयात् 'इतः' इत्येतस्मात् परं पदमित्यर्थः 'सिञ्चत' इति पदमिति यावत् व्यवहितमपि नमयतीति। 'इतः' इत्यस्य अवसानीयत्वे 'सिञ्चत' इत्यत्र मूर्द्धन्यीभावाभावात् संहिता-लोपः प्रसज्येत।

अपरे आचार्य्या अत्र सन्ध्यं सन्धिजं कारणम् अवेच्य आलोच्य तथा च इतोषिञ्चतेति ओत्वनिपातनं तदर्थजमेव ओत्वजमेव षत्वं मन्यमाना अत्र द्विक्रमं क्रमद्वयं कुर्वते। तथाच—'परीतोषिञ्चत' (ऋ° ९।१०७।१) इत्यतः 'परीतः। इतोषिञ्चत' इति क्रमः।

तमःपरं रेफनिमित्तसंशयात्
तथावरित्येतदपोद्यते पदम् ।
अदो पितो सो चिदुषर्वसूयवो
न धन्विधुन्वीत्यपि चातियन्ति किम् ॥४॥

तमःपरं 'तमः' इति परं यस्मात् एवंविधम् 'आवर्' इत्येतत् पदं तथा यथा पूर्वोक्तम् अपोद्यते अवसानात् अपनीयते अवसानीयं न भवतीत्यर्थः (१०।३)। किं कारणम्—रेफनिमित्तसंशयात् न हि विज्ञायते पूर्वेण पदान्तेन उत्तरेण वा पदादिना रेफो भवतीति।

यदि आवरित्येतत् पदं रेफनिमित्तसंशयादनवसानीयं भवति तर्हि, अदो पितो, सोचित्, उषर्वसूयवः इतीमानि पदानि धन्विधुन्वीत्येतौ च प्रवादौ किं कारणं नातियन्ति अनवसानीयं न भवन्तीत्यर्थः। यत इमान्यपि हि तेन तुल्यानि।

नास्याः शङ्काया उत्तरमुपन्यस्तं मूले ग्रन्थे। टीकाकृता चोक्तमुव्वटेन यथा—यद्यपि तुल्यानि तथापि क्रमशास्त्रे अनवसानीयेषु अननुगृहीतानीमानि तस्मात् नातियन्ति। तत्र क्रमशास्त्रे पूर्वपटलव्याकृते गृहीतानामेवात्र पटले हेतुरुच्यते इत्यर्थः।

स्वसारमित्येतदपोद्यते पदं
परः सकारोपजनोऽस्कृतेति च ।
निरस्कृतेति ह्युपसर्गकारित
स्तदन्वयादाचरितं तु पञ्चभिः ॥ ५ ॥

स्वसारमित्यतत् पदम्, एतस्मात् पदात् परभूतः सकारोपजनः सकारागमयुक्तः अस्कृत इति च अवसानीयात् अपोद्यते—अवसानीयं

न भवतीत्यर्थः (१०।३)। अत्र सकारागमः 'निरस्कृत' इति उपसर्ग-कारितः उपसर्गजन्यः। एवं च तदन्वयात् तस्य उपसर्गस्य अन्वयात् पञ्चभिरेव पदैराचरितं सम्पादितं क्रमं विद्यादित्यर्थः। तथाच—'निरु स्वसारमस्कृतोषसम्' (ऋ० १०।१२७।३) इत्यतः क्रमः 'निरु स्वसारमस्कृतोषसम्' इत्येवमेव भवेत्।

सहेति चेमेति च रक्तसंहितम्
गुणागमादेतनभावि चेतन।
पदं च चास्कम्भ चिदित्यतः परं
प्लुतादि चैतानि निमित्तसंशयात् ॥ ६ ॥

सहेति इतिकरणयुक्तम् ईम् इत्येतत् पदं लुप्तमकारमनवसानीयं भवति (१०।३) निमित्तसंशयात् न हि विज्ञायते पूर्वेण वा पदान्तेन उत्तरेण वा पदादिना मकारस्य लोपो भवतीत्यत उभयहेतुसंग्रहार्थमतीयते इत्यर्थः।

एति 'आ' इत्येतत् पदं च रक्तमंहितं सत् अनवसानीयं भवति (१०।३) निमित्तसंशयात्। न ज्ञायते पूर्वेण वा पदान्तेन उत्तरेण वा पदादिना आकारस्य रागो भवतीत्युभयहेतुसंग्रहार्थमतीयते इत्यर्थः।

गुणागमात् एतनभूतम् इतन इत्येतत् पदमनवसानीयं भवति (१०।४) निमित्तसंशयात्। न ज्ञायते पूर्वेण वा पदान्तेन उत्तरेण वा पदादिना एकारो गुणागमो भवतीति अतीयते इत्यर्थः।

चास्कम्भ चित् इत्यस्मात् द्वे पदात् परं 'स्कम्भनेन' इति पदमनवसानीयं भवति (१०।३) निमित्तसंशयात्।

प्लुतादि च पदमनवसानीयं भवति (१०।४) निमित्तसंशयात्।

द्व्यभिक्रमं पूर्व्वनिमित्तमानिन

स्त्रिषूत्तमेष्वाहुरनन्तरं हि तत्।

अनन्तरं त्वेव चतुर्थषष्ठयोः

परं कथं तत्र च न द्व्यभिक्रमम् ॥ ७॥

उत्तमेषु त्रिषु निमित्तसंशयेषु 'गुणागमादेतनभावि चेतन पदं च चास्कम्भचिदितयतः परं'' (११।६) इत्येतेषु इति यावत् अनवसानीयात् पूर्वं पदं निमित्तं मन्यन्ते केचन। किं कारणम्—अनन्तरं हि तत् पूर्वं पदम्। तथा च निमित्तसंशयाभावात् यथानियमं द्वाभ्यां पदाभ्यां क्रममिच्छन्ति।

अनन्तरं तु पुनः चतुर्थषष्ठयोरवमानीययोः 'उषा आवरतमः' 'यमोगर्भम्' इत्येतयोरिति यावत् परं पदं निमित्तं भवितुमर्हति। पूर्वनिमित्तमानिनां हेतुसामान्यात्। कथं तत्र च ते पूर्वनिमित्तमानिनो द्व्यभिक्रमं न कुर्वन्ति एवं स्थितेऽपि। यदि चतुर्थषष्ठयोर्द्व्यभिक्रमं न कुर्व्वन्ति त्रिषूत्तमेषु न कर्त्तव्यम्। अथोत्तमेषु कुर्व्वन्ति चतुर्थषष्ठयोरपि कर्त्तव्यम्। उभयत्र हि विकारहेतुरानन्तर्य्यमेव।

अनानुपूर्व्ये पदसन्ध्यदर्शनात्

पदव्यवेतं च पदव्यवायि च।

ततोऽपरे द्विक्रममाहुराश्रयात्

कृताविलुप्ताव हि वर्णसंहिता ॥ ८ ॥

अनानुपूर्व्यसंहिते क्रमे क्रियमाणे येन पदेन किञ्चित् पदं व्यवेतं व्यवहितं यच्च पदं व्यवैति व्यवधानं विधत्ते ते उभे अनवसानीये भवतः (१०।२) पदसन्ध्यदर्शनात् पदयोरन्योन्येन सन्धिरदृष्टो भवतीति हेतोः।

तथाच 'शुनश्चिच्छेपं निदितम्' इत्यत्र 'शुनःशेपं चित्' इति कृते पदयोरन्योन्यन सन्धिरदृष्टो भवति।

ततोऽपरे आचार्या अस्यामवस्थायां द्विक्रमं कुर्वन्ति आश्रयात् लक्षणानुसारतः कृता ह्यत्राविलोपेन वर्णानां वर्णैः सह संहितेति। तथाच—'शुनश्चिच्छेपं निदितम्' इत्यतः क्रमः 'शुनश्चित् | चिच्छेपं | शेपं निदितम्' इति।

पदानुपूर्व्येण सपूर्व आ तत-
स्ततो व्यवेतं च सह व्यवायि च।
ततो निराहेतरयोश्च ते पदे
ततो व्यवेतेन परस्य संहिता ॥ ८ ॥

पदानामानुपूर्व्येण सपूर्वं विद्यमानपूर्वं अनानुपूर्व्यसंहिताम् आ यावत् द्विपदशः क्रमो वक्तव्यः। यथा—'द्वा जना यातयन्नन्तरीयते नरा च शंसं दैव्यम्' ( ऋ० ८८६।४२ ) इत्यतः क्रमः—'द्वा जना। जना यातयन्। यातयन् अन्तः। अन्तरीयते। ईयते नरा च शंसं दैव्यम्' इति। ननु 'क्रमो द्वाभ्यामभिक्रम्य' ( १०।१ ) इत्येव सिद्धम्? न सिध्यति, ईयते इत्येतस्य नरा इत्येतेन पदैकदेशेन सह सन्धिर्दृष्टः, नराशंसमित्येतेन पदेन सह सन्धिरदृष्टः। तदा पदसन्ध्यदर्शनात् ईयते इत्यस्यापि पदस्य अवक्रमणीयता प्राप्नोति, मा भूदित्युच्यते।

ततो व्यवेतं च पदं यच्च व्यवैति ते उभे सह अनन्तरपूर्व्वभूतेन अनन्तरपरभूतेन च इति शेषः वक्तव्ये। तथाच प्रकृते ईयते, दैव्यम् इत्येताभ्यां सह।

ततः अस्यामेवावस्थायां व्यवायिव्यवेतयोः सहवचनात् परमित्यर्थः ते पदे व्यवेतं च यच्च व्यवैति इत्येते इति यावत् निराह परिग्रहेण

योजयति क्रमवक्ता इति शेषः। यथा—'नराशंसमिति नराऽशंसम्। वेति च।' इतरयोश्च 'शुनश्चिच्छेपं, नरा वा शंसम्' इतीत्रतयोरिति यावत् ते पदे व्यवायिष्यतीतरूपे पदे इत्यर्थः निराह। यथा—'शुनश्चिच्छेपं निदितम्। शुनःशेपम् इति शुनःऽशेपम्। चिदिति चित्।' 'नरा वा शंसं पूषणम्। नराशंसम् इति नराशंसम्। वेति वा।'

ततश्च अव्यवेतेन पदेन परस्य संहिता कर्त्तव्या। तथाच, 'शुनश्चिच्छेपं निदितं सहस्रात्' इत्यत्र क्रमः 'शुनश्चिच्छेपं निदितम्। शुनः शेपम् इति शुनःऽशेपम्। चिदिति चित्। निदितं सहस्रात्' इति।

अनन्तरे त्रिक्रमकारणे* यदि
त्रिभिश्च गार्ग्यः पुनरेव च त्रिभिः।
त्रिसङ्गमे पञ्चभिराप्यनुग्रह-
श्चतुःक्रमस्त्वाचरितोऽत्र शाकलैः॥ १०॥

अनन्तरे अव्यवहिते त्रिक्रमयोः पदत्रयात्मकक्रमयोः कारणे द्वे निमित्ते यदि भवतः तदा प्रथमतः त्रिभिः पदैः क्रमं ब्रूयात् पुनः त्रयाणां मध्यमं पदं प्रत्यादाय पुनरेव च त्रिभिः ब्रूयादिति गार्ग्यः। यथा—उदूषु णः (ऋ ८।७०।८) इत्यत्र क्रमः 'उदूषु | ऊषु णः' इति। अत्र त्रिक्रमत्वे कारणद्वयं तावत् प्रथमम् 'ऊ' इति पदं यन्नाम 'एकवर्णमनोकारम्' (१०।२) इति अतोयते, ततश्च 'षु' इति पदं 'नते सुस्मेति णः परे' (१०।२) इति अतायते। एवञ्च कारणद्वयं भवति।

त्रयाणाम् अतिक्रमकारणानां सङ्गमे सति पञ्चभिः पदैः क्रमेण

* 'अनन्तरेऽतिक्रमकारणे' इति पाठः सुष्ठु प्रतिभाति। तथाच अतिक्रमयोः द्वे कारणे अव्यवहिते यदि भवत इत्यर्थः।

आर्षो अविलोपो भवतीति मन्यन्ते एके आचार्य्याः। तथाच— 'उदूषुणो वसो' इत्यत्र अतिक्रमकारणद्वयं तावत् 'ऊ' 'षु' इत्येते पदे। 'ण' इत्येतस्याप्यनवसानीयत्व'। कस्मात्?—नकारभूतस्य णकारस्य उत्तरेण पदेन सह प्रत्यादाने नो वसो इत्यत्र 'णो वसो' इति सन्धिरदृष्टो भवति। एवञ्चातिक्रमकारणत्रयस्यात्र सद्भावात् पञ्चभिः भवति क्रमः। यथा—उदूषुणो वसो।

अत्र त्रिसङ्क्रमे शाकलास्तु चतुःक्रमं चतुर्भिः पदैः क्रममाचरन्ति। यथा—'उदूषुणः | नो वसो'।

अलोपभावादपरे बहुक्रमं
प्रति स्वमार्षीति न कुर्वते क्वचित्।
असर्वशास्त्रप्रभृतिष्वनेकशः
स्मरन्ति संख्यानियमेन शाकलम्॥ ११॥

अलोपभावात् आर्षो लोपस्य अभावात् अपरे आचार्य्या बहुक्रमं क्वचित् अपि न कुर्वते। यदि बहुक्रमो न क्रियते निमित्तनैमित्तिक-विप्रयोगे कथमार्षो अलोपो भवति—प्रतिस्वम् आर्षी भवतीति। पदान्तस्य पदादिना सन्धौ क्रियमाणे लोपागमविकाराः प्रतिस्वं भवन्तीति द्वयोर्द्वयोः पदयोरार्षो अलोपो भवति। यथा—मोषु | सुनः।

प्रतिस्वमार्षी भवतीति यदुक्तं तत् असर्वशः न सर्वत्र युज्यते इत्यर्थः। कथं—यत्र पदान्तपदाद्योरन्योन्यं प्रति निमित्तत्वं तत्र युक्तम्। यथा—'तन्नः | नोमित्रः' इत्यादौ। यत्र तूभाभ्यां पूर्वं पदं विकारस्य निमित्तं भवति न तत्र युक्तम् त्रिप्रभृतिषु पदेषु। 'मोषु णः' इत्यत्र नामिनिमित्तं षत्वं षत्वनिमित्तं णत्वम्। नाम्यभावे षत्वं न स्यात् षत्वाभावे णत्वं न स्यात्। तस्मात् अनेकशः बहवः स्मरन्ति इच्छन्ति आचार्य्याः संख्यानियमेन त्रिक्रम-चतुःक्रम-पञ्चक्रमान् इति। एतेन

संख्यानियमेन शाकलविधानम्। मोषु णः ( ऋ॰ १।३८।६ ), उदूषु णः ( ऋ॰ ८।७०।९ ), निरु स्वमारमस्कृतोषसम् ( ऋ॰ १०।१२७।३ )।

**अयावने पूर्वविधानमाचरेद्**
**यथापदं सन्धिमपेतहेतुषु।**
**अथो पदाभ्यां समयं पदेन च**
**क्रमेष्ववस्येदतिगम्य सन्दधत्॥ १२॥**

अयावने अभिश्रुणि यत्र क्रमे वचनप्राप्ताभ्यां पदाभ्यां पूर्वं पदं निमित्तं न भवति तत्र इतरार्थः। पूर्वविधानमाचरेत् द्वाभ्यां क्रममाचरेत् इत्यर्थः। यथा—'अग्निम् ईळे। ईळे पुरोहितम्।' यत्र यत्र यावनं तत्र तत्र बहुक्रममाचरेत्—'मोषु णः' इति।

यथापदं सन्धिं कुर्यात् अपेतहेतुषु पदेषु। यथा—'प्रणः | न इन्दो' ( ऋ॰ ९।४४।१ ), अत्र प्रशब्दो णत्वहेतुः। तस्यापाये उत्तरेण सह प्रत्यादाने क्रियमाणे नत्वम्।

अथो पदाभ्यां समयमतिक्रम्य अवस्येत्। सन्दधत् तथा समयं पदेन (१०।१२)। किं पुनः कारणं समयातिक्रमणे—दृष्टक्रमत्वात् (१०।१२)। इत्युक्तं क्रमशास्त्रे एव। किमर्थं पुनः द्वाभ्यामतिक्रम्यावसानम्—अदृष्टक्रमत्वात् इति वक्तव्यम्। एकेन कस्मात् सन्दधदवस्यति—सन्ध्यर्थमिति वक्तव्यम्। यथा—त्वां हत्यदिन्द्रार्णसातौ स्वर्मीळ्हे ( ऋ॰ १।६३।६ )। इतरतः पदपाठः—'त्वाम् | ओ | अर्णऽसातौ | स्वःऽमीळ्हे' क्रमश्च 'त्वां ह | हतरद् इन्द्रार्णसातौ स्वर्मीळ्हे' इति।

**सहेतिकाराणि समासमन्तभाग्**
**बहुक्रमे मध्यगतानि यानि च।**

**तृतीयतां गच्छति यस्य सोष्मवान्**

**अनन्ययोगविकृतं प्लुतादि च ॥ १३ ॥**

(१) सहेतिकाराणि इतिकरणयुक्तानि (२) समासम् अवगृह्याणि (३) अन्तभाक् अर्द्धर्चान्तं यत् पदं भजते तत् (४) त्रिक्रमप्रभृतिषु बहुक्रमेषु यानि मध्यगतानि पदानि (५) यस्य सोष्मवान् तृतीयतां गच्छति—यत्र सोष्मा धकारादिः चतुर्थः सन् वर्गतृतीयं दकारादिम् आपद्यते। (६) अनन्यकृतो यस्य विकारः आत्मकारित इत्यर्थः। (७) प्लुतादीनि च पदानि—तेषामेतेषां पदानामुत्तरेण सह प्रत्यादानं कृत्वा ततः या पदे प्रकृतिर्दृष्टा तां प्रदर्शयेत् परिग्रहेण इत्यर्थः। 'स्विति सु', 'स्त इति स्त'—इत्यादिषु परिग्रहस्य द्वितीये वचने षत्वप्रसङ्गः, स मा भूदित्यर्थः।

**अतीत्य तेषां पदतां प्रदर्शयेत्**

**कृते तु गार्ग्यस्य पुनस्त्वाभिक्रमे।**

**अदृष्टवर्णे प्रथमे प्रदर्शनं**

**स्मरन्ति तत्त्वत्र निराह चोदकः ॥ १४ ॥**

गार्ग्यस्य आचार्यस्य पक्षे 'त्रिभिश्च पूर्वः पुनरेव च त्रिभिः' (१०।१०) इति त्वभिक्रमे कृते एव पदतां प्रदर्शयेत्। यथा—'उदूषु | ऊषु ण | ऊमँ इत्यूमँ | स्विति सु'।

द्वैपदस्य प्रथमे पूर्वपदस्यान्त्यवर्णे अदृष्टे सति तस्य प्रदर्शनमाचार्याः स्मरन्ति इच्छन्ति। तत्तु प्रदर्शनं चोदकः परिग्रह इत्यर्थः निराह प्रवदतीत्यर्थः पदान्तसंशयनिवृत्त्यर्थम् (१०।१०)। तान्त्वामित्यत्र अर्धर्चाद्ये द्विपदे न ज्ञायते नकारान्तं वा पदं मकारान्तं वा। तस्मात् परिगृह्णाति—तामिति ताम्।

पदं यदा केवलमाह सा स्थिति-
र्यदेतिकारान्तमुपस्थितं तदा ।
अथो विपर्यस्य समस्य चाह ते
यदा स्थितोपस्थितमाचरन्त्यु त ॥ १५ ॥

यदा वक्ता केवलम् इतिकरणरहितं पदमाह सा स्थितिरिति वेदितव्यम् ।

इतिकरणान्तं यत् पदमाह वक्ता तत् पदम् उपस्थितसंज्ञं वेदितव्यम् ।

अथो ते पदे स्थितुपस्थिते विपर्यस्य उपस्थितं पूर्वं कृत्वा पश्चात् समस्य च यदाह वक्ता तत् स्थितोपस्थितसंज्ञं वेदितव्यम् (१०।८)।

पुनब्रुवंस्तत्र समासमिङ्गयेत्
स्वरितात्तोऽन्येषु तु सन्धिमाचरेत् ।
अवग्रहस्यैव हि कालधारणा
परिग्रहेऽस्तीतुपधेतानुस्मृता ॥ १६ ॥

तत्र स्थितुपस्थिते क्रियमाणे पुनर्ब्रुवन् वक्ता समासमिङ्गयेत् अवग्रहयुक्तं कुर्यात्। (१०।१०)।

तस्मिन्नेव च स्थित्युपस्थिते 'स्वर्' इत्येतत् पदं वर्जयित्वा अन्येषु पदेषु इतिकरणात् परेषु सत्सु इतिना तेषां यथासम्भवं सन्धिं कुर्यात्। स्वरितेत्यस्य हि पदस्य अवग्रहस्येव हि मात्रा कालः (१०।११)।

अभिक्रमेतोभयतोऽनुसंहितं
ततोऽस्य पश्चात् पदतां प्रदर्शयेत् ।

**यथापदं चान्यतरेण सन्दधत्**
**त्रिषूत्तमेष्वेतदलोपसम्भवात् ॥ १७ ॥**

अलोपसम्भवात् अलोपसम्भवदर्शनात्। अभिक्रमं कुर्य्यात् उभयतः पूर्वेण परेण च अनुसंहितम् संहितानुसारतः। ततः पश्चादस्य पदस्य पदतां प्रदर्शयेत् त्रिषु उत्तमेषु निमित्तसंशयेषु 'गुणागमादेतनभावि चेतन' (११।६) इत्यादिषु इति यावत्।* तथाच—वीरास एतन मर्य्यासः (ऋ' ५।६१।४) इत्यतः क्रमः 'वीरास एतन। एतन मर्य्यासः। इतनेतीतन।' 'चित्कम्भनेन स्कभीयान्' (ऋ' १०।१११।५) इत्यतः क्रमः 'चित् कम्भनेन। कम्भनेन स्कभीयान्। स्कम्भनेनेति स्कम्भनेन।' योनिमारैगारैगप' (ऋ' १।१२४।८) इत्यतः क्रमः 'योनिमारैक्। आरैगप। अरैगित्यरैक्।'

यथापदं पदानुसारतः अन्यतरेण पूर्वेण परेण वा सह सन्दधत् क्रमं ब्रूयात्। यथा—'वीरास एतन। इतन मर्यासः' इति 'वीरास इतन। एतन मर्यासः।' इति वा। 'चित् कम्भनेन। स्कम्भनेन स्कभीयान्' इति 'चित् स्कम्भनेन। कम्भनेन स्कभीयान्' इति वा। 'योनिमारैक्। अरैगप।' इति 'योनिमरैक्। आरैगप' इति वा।

तथाच द्वाविमौ पक्षौ—'उभयतोऽनुसंहितम्' इति 'यथापदं चान्यतरेण' इति च। अज्ञायमाने विकारनिमित्ते अन्यतरयोगे विकारो भवतीति पूर्वस्याभिप्रायः। अन्यतरवचनादन्यतरं निमित्तं भवितुमर्हतीति परस्य।

---

* अपरे पुनः निवृत्तत्वात् निमित्तसंशयाधिकारस्य त्रिषूत्तमेषु इति 'सहेतिकाराणि' (११।१३) इत्येतेषां त्रिषु उत्तमेषु 'तृतीयतां गच्छति यस्य सोष्मवान्' इत्येवमादिषु इति वर्णयन्ति। तथाच तन्मतेनोदाहरणानि—पत्मन्दक्षुषः। दक्षुषः कृष्णजंहसः। धक्षुष इति धक्षुषः। (ऋ' १।१४१।७); वरुणो मामहन्ताम्। मामहन्तामदितिः। ममहन्तामिति ममहन्ताम् (ऋ' १।९४।१६), योनिमारैक्। आरैगप। अरैगित्यरैक्। इत्येवंरूपाणि।

अरक्तसन्ध्येत्यपवाद्यते पदं
पुनस्तदुक्त्वाध्यवसाय पूर्ववत् ।
तथा यदृच्छोपनते बहुक्रमे
क्रमेत तस्यैकपदानि निःसृजन् ॥ १८ ॥

अरक्तसन्धि अननुनासिकम् 'आ' इत्येतत् पदमपवाद्यते परिग्रहादिति शेषः। 'बहुक्रमे मध्यगतानि यानि च' (११।१३) इति नियमेन एतस्य परिग्रहो न भवतीत्यर्थः। कथं तर्हि वक्तव्यम्—तत् पदम् 'आ' इति पदम् इति यावत् पुनरुक्त्वा पूर्ववत् परेण पदेनाध्यवसानं कृत्वा क्रमेत इत्यर्थः। यथा—'मन्द्रमावरेण्यम्' इत्यतः क्रमे 'मन्द्रम् आ वरेण्यम्। आ वरेण्यम्' इति। अरक्तसन्धीति कस्मात्—'अभ्र आँ अपः' इत्यतः क्रमः 'अभ्र आँ अप। एत्या॰' इति।

यदृच्छोपनते बहुक्रमे तथा, यथा आकारस्य पदताप्रदर्शनार्थं प्रत्यादानमुक्तं तथेत्यर्थः, तस्य बहुक्रमस्य एकैकं पदं निःसृजन् अपनयन् वक्ता क्रमेत। कस्य हेतोः—यथा सर्वे पदान्ताः स्वराश्च सार्थदृष्टाः स्युरिति। यथा—आ त्वेता नि ( ऋ॰ १।५।१ ) [ आ। तु। आ। इत। नि इति पदपाठः ] इत्यतः क्रमः 'आ त्वेतानि। त्वेतानि। एतानि। इतानि।' इति। निमित्तनैमित्तिकप्रसङ्गेन यो बहुक्रमः क्रमशास्त्रेषु नाम्नातः स बहुक्रमः। यथा—आ त्वेतानि ( ऋ॰ १।५।१ ) इत्यत्र आ तु इति द्वाभ्यामवसाने क्रियमाणे तकारस्य द्वित्वाभावात्तदनवसानीयं भवति। अनुनासिकभयात् तृतीयम् आ इति पदमनवसानीयं भवति। दीर्घभावार्थं च चतुर्थम् इत इति।

नकारलोपोष्मरभावमानयेद्
अपेतरागां प्रकृतिं परिग्रहे ।

**नतिं प्लुतोपाचरिते च यत्र च**

**प्रगृह्यमेकीभवति स्वरोदयम् ॥ १९ ॥**

परिग्रहे क्रियमाणे नकारस्य लोपभावम्, ऊष्मभावं, रभावं च अपेतरागां रागवर्जितां प्रकृतिमानयेत्। कस्य हेतोः—पदप्रदर्शनार्थमिति। यथा—अस्मा अस्माँ इत्। अस्मानस्मान् इत्यस्मान्ऽअस्मान् ( ऋ॰ ४।३२।४ )। स्वतवाँः पायुः। स्वतवान् इति स्वतवान् ( ऋ॰ ४।२।६ ), अभीशूँरिव सारथिः। अभीशूनिवेत्यभिशून्ऽइव ( ऋ॰ ६।५७।६ )।

नतिं, प्लुतम्, उपाचरितं, यत्र स्वरोदयं प्रगृह्यम् एकीभवति तच्च प्रकृतिमानयेत् परिग्रहे क्रियमाणे पदप्रदर्शनार्थमित्यर्थः। उदाहरणार्थं ( १०।१३ ) श्लोको द्रष्टव्यः।

**प्रवादिनो दूणाशदूढ्यदूळभात्**

**परिष्ववोषेषु च रेफमूष्मणः।**

**महाप्रदेशं स्वधितीव चानयेत्**

**नुदेच्च शौद्धाक्षरसन्धिमागमम् ॥ २० ॥**

दूणाश, दूढ्य, दूळभ—इत्येतान् प्रवादिनः प्रकृतिमानयेत् परिग्रहे क्रियमाणे पदप्रदर्शनार्थमित्यर्थः।

अघोषेषु च परेषु ऊष्मणो यो रेफः क्रियते तं प्रकृतिमानयेत् परिग्रहे क्रियमाणे पदप्रदर्शनार्थमित्यर्थः।

महाप्रदेशं स्वधितीवेत्येतच्च पदं प्रकृतिमानयेत् परिग्रहे क्रियमाणे। नाम्ना इन्दुः स्वधितीव ( ऋ॰ ५।७।८ ) इत्यत्र रेफस्य लोपो दीर्घत्वं च युगपन्निपातितम्। तस्मान्महाप्रदेशोऽयम्।

शौद्धाक्षरसन्धिजं चागमं नुदेत् प्रकृतिमानयेत् परिग्रहे क्रियमाणे पदप्रदर्शनार्थमित्यर्थः। उदाहरणार्थं १०।१४ श्लोको द्रष्टव्यः।

अभिक्रमे पूर्वविधानमाचरेत्
पुनर्ब्रुवंस्तूत्तरकारितं क्रमे ।
विकारमन्यद् यदतोऽनुसंहितं
तदाचरेदन्तगताद्ययोस्तु न ॥ २१ ॥

क्रमविधौ अभिक्रमे द्विपदस्य प्रथमे वचने पूर्वविधानमाचरेत् पूर्वपदकृतं विकारं पठेदित्यर्थः ।

पुनर्ब्रुवन् द्वितीये वचने उत्तरकारितं उत्तरपदजन्यं विकारं पठेत्, न तु पूर्वपदजन्यमित्यर्थः । यथा—'प्रण इन्द्रो' इत्यतः क्रमः 'प्रणः । न इन्दो ।' इति ।

अतः पूर्वोत्तरकृतविकाराद् यदन्यत्—यत् पदं स्वयं विकृतमिति यावत् तदनुसंहितमाचरेत् क्रमकाले उभयवचनेऽपि यथासंहितं पठेदित्यर्थः । यथा—'वाजेषु सासहिः' इत्यतः 'वाजेषु सासहिः' इत्येव ( १०।५ )।

अन्तगतस्य आद्यगतस्य च स्वयंविकृतस्यापि उभयवचने नाचरणं कुर्य्यात् तयोरुभयवचनस्याभावात् ।

सकृद् यथासंहितमेषु वाचरेत्
पुनर्विचक्षत् पदमप्यसन्दधत् ।
परिग्रहे सन्धिषु कारणान्वयाद्
अविक्रमं द्रा घ्मसु चोष्मसन्धिषु ॥ २२ ॥

एषु 'नकारलोपोष्मरभावमानयेत्' (११।१८) इत्येवमादिषु परिग्रहे क्रियमाणे सकृत् यथासंहितं चरेत् । पुनर्द्वितीयं वचनं विवक्षन् वक्ता पदमपि असन्दधन् सन्धिमकुर्वन् ब्रूयात् । कस्य हेतोः—सन्धिषु

कारणान्वयात्। एषु हि नकारलोपादिषु सन्धौ तत्कारणमन्वेति परिग्रहस्य पूर्ववचने यस्मिंस्ते नकारलोपादयो विहिताः। यथा— श्येनाँ इव व्रजतः। श्येनाँ इवेति श्येनान्ऽइव (ऋ १।१६५।२), विश्वश्चन्द्रा अमित्रहन्। विश्वश्चन्द्रा इति विश्वऽचन्द्राः (ऋ १।१२४।३)।

द्व्यूष्मसु ऊष्मसन्धिषु अविक्रममेव कुर्यात् वक्ता परिग्रहस्य प्रथमे वचने। किमर्थमिदमुच्यते? इह निष्षिध्वरीः, स्वर्षातेति चेत्यत्र परिग्रहे (११।१८ श्लोकेन) नतेः (११।२० श्लोकेन) रेफस्य च निवृत्तौ कृतायाम् पुनर्विसर्जनीयस्य 'तमेवोष्माणमूष्मणि' (४।१०) इति नित्यविधिं बाधित्वा 'ऊष्मणि चानते' (४।११) इति विभाषा प्राप्नोति। तत्र व्यापत्तिरेव इष्यते न विक्रमः तदर्थमिदमुच्यते। तथा च क्रमः 'निष्षिध्वरीस्ते। निःसिध्वरीरिति निःऽसिध्वरीः।' 'स्वर्षातयत्। स्वस्सातेति स्वःऽसाता।'

**समानकालावसमानकारणा-**
**वनन्तरौ वा यदि संनिगच्छतः।**
**पदस्य दोषावथ हेत्वसंग्रहे**
**नियुक्तमार्ष्यन्यतरेण लुप्यते॥ २३॥**

इदमादिभिः श्लोकैर्बहुक्रमस्योपयोगित्वं प्रदर्श्यते। समानकालौ एककालौ युगपत् सम्भाव्यमानौ इत्यर्थः असमानकारणौ नानानिमित्तौ अनन्तरौ वा अव्यवहितौ निमित्ताद्यव्यवहितौ वा यत्र पदस्य दोषौ पदस्य विकारावित्यर्थः सन्निगच्छतः सन्निहितौ भवतः; अथास्यामवस्थायां हेत्वसंग्रहे बहुक्रमेण निमित्तापरिग्रहे बहुक्रमे अक्रियमाणे इत्यर्थः नियुक्तं निश्चितम् आर्षी संहिता अन्यतरेण पूर्वेण परेण वा वचनेनेति यावत् लुप्यते। अतो बहुक्रमः कर्त्तव्य इत्यर्थः।

मकारलोपे विकृतस्वरोपधे
तृतीयभावे प्रथमस्य च ध्रुवम् ।
विपर्य्ययो वेतरथाभ्युपेयुषां
तथोभयेषामनुनासिकोदये ॥ २४ ॥

मकारलोपे विकृतस्वरोपधे सति प्रथमस्य तृतीयभावे च वर्ग-प्रथमवर्णस्य स्थाने तृतीयवर्णत्वापादनकाले चेत्यर्थः बहुक्रमे अक्रियमाणे ध्रुवमार्षी लुप्यते। तथाच—ए रीणन्ति ( ऋ' ८।७१।६ ) [ आ | ईम् इति। रिणन्ति—इति पदपाठः ] इत्यत्र एकारादेशनिमित्तमेत्वमुदात्तत्वं च तदुत्तरेण प्रत्यादाने क्रियमाणे लुप्यते। इन्द्रस्य त्रिष्टुबिह ( ऋ' १०।१३०।५ ) इत्यत्र पकारस्य परनिमित्तं तृतीयत्वं तत्पूर्वेण तु वचने लुप्यते।

अथवा बहुक्रमाद्द्वतेऽपि प्रथमस्य तृतीयभावे विपर्य्ययः। कश्च विपर्य्ययः—लोप इति प्रकृतम्, अलोपस्तस्य विपर्य्ययः। इतरथाभ्युपेयुषाम् 'तस्मादन्यमवसाने तृतीयं गार्ग्यः स्पर्शम्' ( १।१३ ) इति गार्ग्यमतं येऽभ्युपगच्छन्ति तेषामित्यर्थः। गार्ग्यमतेन तृतीयस्यैव प्रकृतत्वात् बहुक्रमेऽक्रियमाणेऽपि न तस्य लोपाशङ्का इत्यर्थः।

अनुनासिकोदये अनुनासिकपरे वर्गप्रथमवर्णे सतीत्यर्थः उभयेषां गार्ग्यमतं येऽभ्युपगच्छन्ति ये च शाकटायनमतं ( १।१३ ) तेषा मुभयेषामित्यर्थः सति आर्षी लुप्यते बहुक्रमे अक्रियमाणे। यथा—त्रिककुम् निवर्तत् ( ऋ' १।१२१।४ ) इत्यत्र पकारस्य परनिमित्तं मत्वं द्विक्रमे क्रियमाणे लुप्यते।

अथो नतेनोपहितेऽनुनासिके
तथाक्षरस्य क्रम एकपातिनः।

न चात्र पूर्व्वः स्वरितेन संहितां
लभेत तस्मिन् नियतस्वरोदये ॥ २५ ॥

अथो नतेन उपहिते अनुनासिके सति परेण सह बहुक्रमे अक्रियमाणे आर्षी लुप्यते। यथा—'मोषुणः' इत्यत्र षत्वनिमित्तं णत्वम्, तत् उत्तरेण सह प्रत्यादाने क्रियमाणे लुप्यते।

एकपातिन एकीभूतस्य अक्षरस्य क्रमे द्विक्रमे इति यावत् ध्रुवमार्षी लुप्यते। यथा—मुञ्चता व्यंहः (ऋ० ४।१२।६) इत्यतः 'मुञ्चता वि। व्यंहः' इति क्रमे क्रियमाणे आर्षी लुप्यते।

अत्रैकपातिनः क्रमे तस्मादेकपातिनः पूर्व्वः स्वरः स्वरितेन संहितां न लभेत तस्मिन् नियतस्वरोदये सति अनुदात्तस्वरे परभूते सतीत्यर्थः। सत्यां च स्वरितेन संहितायां संहितागतस्वरविघातः स्यात्। तथाच एवमपि बहुक्रम एव कर्त्तव्य इत्यर्थः। तथाच—'येना हंसि न्यत्रिणम्' (ऋ० ८।१२।१) (येन। हंसि। नि। अत्रिणम्—इति पदपाठः) इत्यतः 'येन हंसि। हंसि नि। नि अत्रिणम्।' इति क्रमो न स्यात्।

यदा च गच्छत्यनुदात्तमक्षरं
वशं पदादेरुदयस्य तेन च।
उदात्तपूर्व्वे नियतस्वरोदये
परो विलोपोऽनियतो यदावरः ॥ २६ ॥

यदा अनुदात्तमक्षरं स्वरितं च उदात्तस्य पदादेर्वशं गच्छति 'उदात्तवत्येकीभाव उदात्तं सन्ध्यमक्षरम्' (३।६) इति नियमे

तेनोदात्तेन एकीभावो भवतीत्यर्थः तदा बहुक्रमे अक्रियमाणे ध्रुव-माषो लुप्यते। यथा—'आ तेऽव' (ऋ° ५।३५।३) इत्यत्र ते इत्यनुदात्तस्य अव इत्युत्तरेणैकादेशेनोदात्तेन यत् उदात्तत्वं तत् पूर्वेण सहवचने लुप्यते। तथा, 'आ ते त्वां सोम पवमान' स्वाध्योऽनु' (ऋ° ८।८६।२६) इत्यत्र स्वाध्यो इति स्वरितस्य उत्तरेण अनु इत्यकारेण एकादेशे उदात्तत्वम्, तत् पूर्वेण सहवचने लुप्यते।

उदात्तपूर्वे एकादेशे नियतस्वरोदये सति परः परेण सहवचने इत्यर्थः आषो विलोपो भवति। यथा—एन्द्र सानसिम् (ऋ° १।८।१) [आ | इन्द्र | सानसिम्—इति पदपाठः] इत्यत्र आकारेण सहैकादेशनिमित्तम् इकारस्य उदात्तत्वम्। तस्य परेण सह प्रत्यादाने विलोपो भवति। यथा – इन्द्र | सानसिम्।

अनियतः उदात्त इति यावत् यदा परो भवति अनुदात्तस्य पूर्वस्तदा पूर्वेण सहवचने इत्यर्थः आषो विलोपो भवति। यथा—ब्रुवन्तु तेऽवन्तु (ऋ° १०।१५।५) [ब्रुवन्तु | ते | अवन्तु—इति पदपाठः] इत्यत्र ते इति उदात्तस्य अवन्तु इत्यनुदात्तेन सह एकादेशनिमित्तं स्वरितत्वम्। तस्य पूर्वेण सहवचने विलोपः। यथा– ब्रुवन्तु ते।

स्वरैकादेशं स्वरितस्य चोत्तरं
यदा निहन्यादनिमित्तमक्षरम्।
उदात्तपूर्वोऽप्यनुदात्तसङ्गमो
यदा स्वरौ द्वौ लभतेऽपि वा बहून्॥ २७॥

स्वरितस्य स्वरस्य उत्तरमनुदात्तमेकादेशं तूदात्तस्वरितोदयं सन्तं निहन्ति वक्ता। यथा—'मोतारः। श्रोण्योः। रसम्।' इत्यतः

'सोतार ओण्यो३ रसम्' ( ऋ ८।१६।१ ) इति। तदक्षरम् अनुदात्ती-भूतं यदा पूर्वेण सह अनिमित्तं ब्रूयात् द्विक्रमे तदा आर्षी लुप्यते। अतो बहुक्रमः कर्त्तव्य इति भावः।

उदात्तपूर्वः स्वरितपूर्वश्च अनुदात्तानामक्षराणां समवायो यदा द्वौ स्वरौ, अपि वा बहून् स्वरान्, लभते तदा बहुक्रमे अक्रियमाणे आर्षी लुप्यते। तद्यथा—'उत। देवाः। अवऽहितम्' इत्यतः 'उत देवा अवहितम् ( ऋ १०।१३७।१ )। इत्यत्र द्विक्रमे क्रियमाणे 'उत देवाः' इति परनिमित्तं 'देवाः' इत्याकारस्यानुदात्तत्वं लुप्येत। 'देवा अवहितम्' इत्यत्र च क्रमे पूर्वनिमित्तम् आद्यस्य स्वरितत्वं लुप्येत। तथाच बहुक्रम एव कार्य्यः।

**यथा प्रक्लृप्ते स्वरवर्णसंहिते**
**तयोस्तयोरक्षरवर्णयोस्तथा।**
**अदर्शनेऽनार्ष्यविलोप उच्यते**
**क्रमेष्वनार्षं ब्रुवतेऽपरे स्वरम्॥ २८॥**

यथा येन प्रकारेण प्रक्लृप्ते विहिते स्वरवर्णसंहिते स्वरसंहिता वर्णसंहिता च तयोस्तयोरक्षरवर्णयोः अक्षरस्य स्वरस्य संहिता वर्णानां च संहिता तयोः स्वरवर्णसंहितयोरदर्शने सति उच्यते अनार्ष्य-विलोप आर्षीविलोप इत्यर्थः। विलोपो विनाशः, तस्याभावः अविलोपः, आर्ष्या अविलोपः आर्ष्यविलोपः, न आर्ष्यविलोपः अनार्ष्यविलोपः। यथा—'न इन्द्रो। इन्द्रो महे' ( ऋ ८।४४।१ ) इत्यत्र इन्द्रो इत्येतस्य प्रचयस्वरस्याभावाद् विलोप एव। केषाञ्चिन्मते नैष दोषः। यतः क्रमेषु

अपरे आचार्या: स्वरमनार्षं ब्रुवते। तथाच—स्वरविलोपेऽपि आर्षीविलोपो न भवतीति तेषाम् आशय:।

अदृष्टमार्ष्यां यदि दृश्यते क्रमे
विलोपमेवं ब्रुवतेऽपरे तथा।
स कारणान्यार्ष्यविलोपविक्रम:
क्रमेण युक्तोऽपि बहूनि सन्दधत्॥ २९॥

यद्यप्यन्यतरस्मिन् क्रमवचने आर्षी दृश्यते, संहितायाम् अदृष्टं पुन: क्रमे दृश्यते एवमवस्थायामपरे आचार्या विलोपं ब्रुवते अमत: प्रादुर्भावात्।

स एष क्रम आर्ष्य विलोपविक्रमहेतु: भवति—तमलोपं प्रति कारणानि निमित्तानि बहूनि पदानि सन्दधत्। तथाच—'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमम्' ( ऋ' १०।७५।५ ) इत्येव क्रमो भवेत् यतोऽत्र द्विक्रमेषु क्रियमाणेषु संहितागतस्वरलोपेनार्षीलोप: स्यात्।

पदं पदान्तश्च यदा न गच्छति
स्वरावसानं स तु योऽत्र युज्यते।
तदा न रूपं लभते निराकृतं
न चेन्निराहोपनिवृत्य तत् पदम्॥ ३०॥

परिग्रहप्रयोजनमाह पदमित्यादिना। पदं यदा स्वरं न गच्छति, पदान्तश्च यदा अवसानं न गच्छति तदा निराकृतं विस्मृतम् अन्येन केनचिदाच्छादितमित्यर्थ: रूपं न लभ्यते क्रमेऽपि। पदकाले स्वरकृतं च वर्णकृतं च यत् तत्र जायते क्रमक: उप-

निवृत्य तत् पदं चेन्न निब्रवीति परिग्रहेणेतरार्थः। तथाच—'ते | अवदन्' इत्यतः तेऽवदन् (ऋ° १०।१०९।१) इति संहितायां सत्याम्—'तेऽवदन् | त इति ते।' इति परिग्रहात्तेते इत्यस्य उदात्तं रूपं न लभ्यते। 'नु | इत्था' इत्यतश्च 'नू इत्था' (ऋ° ११३२।४) इति संहितायां सत्यां 'नू इत्था। न्विति नु' इति परिग्रहात्तेते ह्रस्वं रूपं न लभ्यते।

स्थितिस्थितोपस्थितयोश्च दृश्यते
पदं यथावद्व्ययवद्व्युपस्थिते।
क्वचित् स्थितौ चैवमतोऽधि शाकलाः
क्रमे स्थितोपस्थितमाचरन्त्युत ॥ ३१ ॥

यदुक्तमधस्तात् स्थितुपस्थितस्थितोपस्थितानामन्यतमेन पदप्रदर्शनमाचरन्ति इति तत् अयुक्तम्। कस्मात्—स्थितिस्थितोपस्थितयोरेव हि यथावत् पदं दृश्यते अव्ययवत् अन्यूनवत् इत्यर्थः। उपस्थिते व्ययवत् लोपवच्च दृश्यते। यथा—'आरैक् पन्थाम्' (ऋ° १।११३।१६) इत्यत्र 'अरैगिति' इत्येवम् उपस्थिते सति पदान्तस्य पदे दृष्टं स्वरितत्वं न दृश्यते, अदृष्टम् अनुदात्तत्वं च दृश्यते। तस्माद व्ययवत् इत्युच्यते। यथाच, मोषणः (ऋ° १।१७३।१२) इत्यत्रापि 'स्विति' इत्युक्ते ह्रस्वान्तं न दृश्यते।

क्वचित् स्थितावप्येवम्—यथोपस्थितं तथा व्ययवत् स्थितौ दृश्यते। यथा—'प्रातः सोमम्' (ऋ° ७।११।१) इत्यत्र 'प्रातः' इत्युक्ते पदे दृष्टो रेफो न दृश्यते। अस्मात् हेतोः शाकलाः क्रमे स्थितोपस्थितमेव आचरन्ति। यथा—'अरैगित्यरैक्', 'स्विति सु', 'प्रातरिति प्रातः'।

क्रमेत सर्वाणि पदानि निब्रुव-
न्निति स्मरन्त्याचरितं तु नोत्क्रमेत् ।
क्रमस्य वर्त्म स्मृतिसम्भवौ ब्रुवन्
समाधिमस्यान्वितराणि कीर्त्तयेत् ॥३२॥

क्रमेत क्रमं ब्रूयात् सर्वाणि पदानि एकैकं पदं निब्रुवन् द्विक्रमे बहुक्रमे वा इति स्मरन्ति एवमिच्छन्त्येके आचार्य्याः। कस्य हेतोः—एवं सुखतरमार्षो अविलोपो भवतीति।

पर्षदा यदाचरितं पूर्वशास्त्रे यद् विहितं 'क्रमो द्वाभ्याम्' (१०।१) इत्यादि तत् नोत्क्रमेत् नान्यथा कुर्य्यात् इत्यर्थः।

क्रमस्य वर्त्म वृत्तं स्मृतिसम्भवौ स्मृतिः शास्त्रं तत्सन्दर्शनादि, सम्भव उपपत्तिरित्यनर्थान्तरम् हेतू ब्रुवन्। ब्रुवन् वक्ता अस्य क्रमस्य समाधिं सम्पदम् अनु अनुगम्य अनुलक्ष्य इतराणि हेतुपटलेऽस्मिन् निर्दिष्टानि आमनानि इति यावत् कीर्त्तयेत्। पूर्वस्मिन् क्रमशास्त्रे दशमपटले या सम्पदुक्ता तस्या अविरोधेन हेतुपटलोक्तानि कुर्य्यादित्यर्थः। यथा—'अग्निमीले। ईले पुरोहितम्।' इतरत्र हेतौ परिगृह्यमाणे आर्षीलोपभयात् विक्रमः प्राप्नोति 'अदृष्टमार्षी' यदि दृश्यते क्रमे' (१०।२८) इति नियमेन। द्वितीयक्रमे च संहिताऽदृष्टस्वरो दृश्यते एव।

यथोपदिष्टं क्रमशास्त्रमादितः
पुनः पृथक्तैर्विविधैर्न साधुवत्।
इति प्र बाभ्रव्य उवाच च क्रमं
क्रमप्रवक्ता प्रथमं शशंस च ॥ ३३ ॥

क्रमशास्त्रं यथा आदित उपदिष्टं दशमे पटले इत्यर्थः तदेव साधु अध्येतव्यम्। एकादशे पटले इत्यर्थः पुनः पृथक्तं विविधैः यदुक्तं तन्न साधुवत् विद्यात्। किं कारणं- सर्वथा अभिक्रमे क्रियमाणे स्वं स्वं पदान्तरमाश्रित्य संहितायां अविलोप इत्युच्यते।

इतीत्थं बाभ्रव्यः बभ्रुपुत्रो भगवान् पाञ्चालः क्रमस्य प्रवक्ता क्रमं प्रथमं प्रोवाच प्रशशंस च।

**क्रमेण नार्थः पदसंहिताविदः**
**पुराऽप्रसिद्धाश्रयपूर्व्वसिद्धिभिः।**
**अकृत्स्नसिद्धश्च न चान्यसाधको**
**न चोदयापायकरो न च श्रुतः॥ ३४॥**

योऽयं विहितो विधिः 'क्रमो द्वाभ्यामतिक्रम्य' (१०।१) इति तेन नार्थः। कस्य हेतोः—पदसंहिताविदः पदानि विदुषः संहितां च उत्तरकालं क्रमविधिरारभ्यते।

किञ्च पुरा अप्रसिद्धाश्रयपूर्वसिद्धिभिः (हेतौ तृतीया) पुराऽप्रसिद्धया। एवञ्चास्य क्रमस्य पदसंहितातः पूर्वमसिद्धैः आश्रय—पूर्वसिद्धिभिः। पदसंहितं क्रमस्याश्रयः तत्पूर्विकाश्चास्य सिद्धयो भवन्ति। अकृत्स्नसिद्धश्च न कृत्स्नसिद्धः क्रमो भवति। यद्यपि चास्य विशेषाः सन्ति संहितायां अविलोपार्थं तथापि पदसंहिताश्रयत्वात् अकृत्स्नसिद्ध इत्युच्यते। न चान्यसाधकः इति—न चायं क्रमः अन्य-शास्त्राश्रयत्वात् विशेषं साधयति। अकृत्स्नसिद्धस्य ह्यन्यसाधनं न विद्यते। न चोदयापायकर इति—न चायं क्रमोऽध्येतुरभ्युदयकरः, न चापायकरः। न च श्रुत इति—न चायं क्रमः अष्टानां ब्राह्मण-पथानामन्यतमस्मिन् ब्राह्मणपथे श्रूयते। एभिः कारणैः क्रमेण नार्थ इत्युच्यते।

**असिधात: सिद्धिविपर्य्ययो यदि**
**प्रसिध्यतोऽसिद्धिविपर्य्ययस्तथा ।**
**सहापवादेषु च सत्सु न क्रमः**
**प्रदेशशास्त्रेषु भवत्यनर्थकः ॥ ३५ ॥**

यदुक्तं पदसंहितात् पूर्वमयं क्रमो न सिध्यति तस्मादस्य प्रसिद्धिविपर्य्यय इति तन्न—प्रसिध्यतः प्रसिद्धात् पदसंहितादस्य उत्पत्तेः असिद्धत्वस्य विपर्य्ययस्तथा भविष्यति। प्रसिद्धं हि पदसंहितमाश्रित्य यदयं क्रमो वर्त्तते ततः प्रसिद्ध एव।

अपवादो निन्देत्यर्थः। यैः अर्थाः प्रदिश्यन्ते तानि प्रदेशशास्त्राणि। सहापवादेषु प्रदेशशास्त्रेषु साङ्ख्ययोगादिशास्त्रेषु इति यावत् सत्सु तेषु शास्त्रेषु विद्यमानेष्वित्यर्थः। तेष्वपि अन्यस्मिन् अन्यस्यापवादो दृश्यते। तथाच नायं क्रमोऽनर्थको भवितुम् अर्हति।

**विपर्य्ययाच्छास्त्रसमाधिदर्शनात्**
**पुराप्रसिद्धे क्रमयोरनाश्रयात् ।**
**समभ्युपेयात् बहुभिश्च साधुभिः**
**श्रुतेश्च सम्मानकरः क्रमोऽर्थवान् ॥ ३६ ॥**

विपर्य्ययादिति—'क्रमेण नार्थः पदसंहिताविदः' (११।३४) इत्युक्त्वा 'प्रसिध्यतोऽसिद्धिविपर्य्ययस्तथा' (११।३५) इति यदुक्तं स विपर्य्ययः। तेन क्रमोऽर्थवान् भवति। असिद्धा अपि भावाः सिद्धान् आश्रित्य सिद्धा भवन्तीत्यर्थः। शास्त्रसमाधिदर्शनाच्चायं क्रमोऽर्थवान् भवति। शास्त्रसमाधिदर्शनादिति—क्रमशास्त्रे ह्यनेकविधिविशेषाः

संहितापदादिपदान्तानुग्रहार्थो विधीयन्ते यथैवानवसानीयानि, निमित्त संशयानीत्येवमादयः। पुराप्रसिद्धेश्चायं क्रमोऽर्थवान् भवति। पुराप्रसिद्धेरिति—कथं हि नाम पुरा अप्रसिद्धः सन् अनवसानीयादीन् विशेषान् आरभेत। उभयोरनाश्रयात्—उभे अपि पदसंहिते अनाश्रित्य क्रमो वर्त्तते तस्मादपि अर्थवान् क्रमः। कथमनाश्रयादिति—उच्यते। व्यतिरिक्ते हि पदसंहिते। विशेषारम्भश्च क्रमशास्त्रे दृश्यते—यथैवावगृह्याणां परिग्रहणम्। समभ्युपेयाद्बहुभिश्च साधुभिः—पूर्वाचार्य्यैः समभ्युपगमनाच्चायं क्रमोऽर्थवान् भवितुमर्हति। कथं हि नाम अनर्थकं सन्तं बहवः साधवः परिगृह्णीयुः। श्रुतेश्च श्रुतिदृष्टत्वात् च 'द्विपदेनाङ्गिरसः प्रोचुः' 'त्रिपदेन बालखिल्याः' इति। एभिः कारणैः क्रमोऽर्थवान् भवति। भवति चात्र श्लोकः—'सिद्धोऽयं श्रुतितश्च लक्षणतश्च लक्षितोऽनुमतश्च विविधैर्गुणविशेषैः। वितत्य सन्धिं नयति च पदविषयं पुनरपि च विकृतिमुचितां न जहाति॥'

ऋते न च द्वैपदसंहितास्वरौ
प्रसिध्यतः पारणकर्म्म चोत्तमं।
क्रमादतोऽप्यृग्यजुषां च बृंहणं
पदैः स्वरैश्चाध्ययनं तथा त्रिभिः॥ ३७॥

क्रमादृते द्वैपदसंहिता द्वैपदस्वरश्च न सिध्यति, द्वैपदे हि सिद्धे उत्तरारम्भः शक्यते कर्त्तुं पादार्द्धर्चसूक्तसिद्ध्यर्थम्। अतश्चायं क्रमोऽर्थवान् भवति।

भगवता पाञ्चालेन स्थापितानां पारायणकर्म्मणां क्रमपारायणमुत्तमं परम्परया महिम्ना च। भवति चात्र श्लोकः—'प्रगाथे

पुनरादानं दृष्ट्वा यज्ञविधौ मुनिः। अर्थवन्तं क्रमं ब्रूयाद् देवतायाश्च शाश्वतः।' तथाच—क्रमोऽर्थवान् भवति।

क्रमात् ऋचाञ्च यजुषाञ्च बृंहणं सन्धारणं क्रियते। अतोऽपि क्रमोऽर्थवान् भवति।

द्वैपदेन पदाध्ययनेन चोदात्तानुदात्तस्वरितै ऋग्यजुषां सन्धारणं क्रियते। तथाध्ययनं त्रिभिरन्योऽन्यं वर्त्तते संहितापदक्रमैः। तस्माच्चायं क्रमोऽर्थवान् भवति। भवति चात्र श्लोकः—'शरदुज्ज्वलो वितिमिरो विभाति भगवान् यथांशुमान्। सत्यवचनवित्तमः क्रमकः क्रमते हि संशयतमस्तथात्मवान्॥' इति।

## द्वादशं पटलम्।

ऊष्मान्तःस्थसोष्मचकारवर्गा
नान्तं यान्त्यन्यत्र विसर्जनीयात्।
ऋकारल्कारौ परमर्धमूष्मणां
नादिं तकारादवरे च सप्त॥ १॥

ऊष्माणश्च, अन्तःस्थाश्च, ऋकारश्च, सोष्माणश्च, चकारवर्गश्च इत्येते सप्तविंशतिर्वर्णाः पदान्तं न गच्छन्ति। विसर्जनीयादन्यदेव एवं भवति—विसर्जनीयस्तु, ऊष्मसु मध्ये तिष्ठति, तथापि स पदान्तं गच्छति इत्यर्थः।

ऋकार, ऌकारः, ऊष्मणाञ्चोत्तरभागो विसर्जनीयादिरिति यावत्, तकाराच्च अवरे पूर्व्वे सप्त ञकारादय इति यावत्—इत्येते त्रयोदश वर्णाः पदादिं न गच्छन्ति।

नान्योन्येन मध्यमाः स्पर्शवर्गाः
संयुज्यन्ते न लकारेण रेफः।
स्पर्शैर्वकारो न परैरनुत्तमै
स्तथा तेषां घोषिणः सर्वथोष्मभिः ॥ २ ॥

मध्यमा ये त्रयः स्पर्शवर्गाः चवर्गटवर्गतवर्गा इति यावत् ते अन्योऽन्येन सह न संयुज्यन्ते। स्ववर्गीयैः अन्यैश्च संयुज्यन्त एव।

लकारेण सह रेफो न संयुज्यते।

अनुत्तमैः स्पर्शैः परैर्वकारो न संयुज्यते, पूर्व्वैस्तु संयुज्यते।

तथैव तेषां स्पर्शानाम् उत्तमादन्ये घोषिणः सर्व्वथा ऊष्मभिर्न संयुज्यन्ते ; अघोषास्तु संयुज्यन्ते।

नान्त्यान्तःस्था न प्रथमोष्मभिः परै
र्न रेफो रेफेण न सोष्मणोष्मवान् ।
न स्पर्शैरूष्मा प्रथमः परः सन्
नानुत्तमैः स च सोष्मा च पूर्व्वौ ॥ ३ ॥

अन्त्या अन्तःस्था य इति यावत् प्रथमा चान्तःस्था व इति यावत् परैः परभूतैः ऊष्मभिः न संयुज्येते। पूर्व्वभूतैस्तु संयुज्येते इति भावः।

रेफो रेफेण न संयुज्यते, अन्यैस्तु संयुज्यते इत्यर्थः।

सोष्मणा सह ऊष्मवान् न संयुज्यते।

स्पर्शैः सह प्रथमः उष्मा हकार इति यावत् परः सन् न संयुज्यते।

अनुत्तमैः स्पर्शैः सह स च प्रथम ऊष्मा हकार इति यावत् सोष्मा च पूर्व्वौ सन्तौ न संयुजेरते।

नानुत्तमा घोषिणोऽघोषिभिः सह
स्पर्शैः स्पर्शा नोत्तमा ऊष्मभिः परैः।
लकारस्पर्शैर्न यकार उत्तरै
रूष्माणोऽन्योन्येन च न ऋक् पदेष्विदम्॥४॥

अनुत्तमा ङ-ञ-ण-न-मव्यतिरिक्ता इति यावत् घोषिणः स्पर्शाः अघोषैः स्पर्शैः पूर्वभूतैः परभूतैश्च सह न संयुज्यन्ते। उत्तमास्तु संयुज्यन्त एव इत्यर्थः।

उत्तमाः स्पर्शाः ङ-ञ-ण-न-म इत्येते इति यावत् ऊष्मभिः परैः परभूतैः सह न संयुज्यन्ते, पूर्व्वैस्तु संयुज्यन्त एव इत्यर्थः।

लकारेण स्पर्शैश्च उत्तरैः परभूतैः सद्भिः यकारो न युज्यते, पूर्वैस्तु युज्यते इति भावः।

ऊष्माणोऽन्योन्येन न संयुज्यन्ते स्वैस्तु संयुज्यन्ते इत्यर्थः।

यदिदमस्मिन् पटले विधानम् उक्तं तत् ऋक्षु पदमध्ये एव भवति, पदसन्धौ न भवति। तथाच—वषट् ते ( ऋ॰ ७।९९।७ ), सुमदंशुर्ललामीः ( ऋ॰ १।१००।१६ ) इत्यादि सिद्धम्।

नामाख्यातमुपसर्गौ निपात-
श्चत्वार्य्याहुः पदजातानि शाब्दाः।
तन्नाम येनाभिदधाति सत्वं
तदाख्यातं येन भावं स धातुः॥ ५॥

नाम, आख्यातम्, उपसर्गः, निपात—इति चत्वारि चतुर्विधानि पदजातान्याहुः शब्दशास्त्रविदः।

येन शब्देनाभिदधाति वक्ता सत्त्वं द्रव्यमित्यर्थः तन्नाम इत्युच्यते।

येन शब्देनाभिदधाति वक्ता भावं क्रियामित्यर्थः स आख्यातम् धातुः इति चोच्यते।

प्राभ्यापरानिर्दुरनुव्युपापसं-
परिप्रतिन्यत्यधिसूदवापि।
उपसर्गा विंशतिरर्थवाचकाः
सहेतराभ्यामितरे निपाताः॥ ६॥

प्र, अभि, आ, परा, निः, दुः, अनु, वि, उप, अप, सं, परि, प्रति, नि, अति, अधि, सु, उत्, अव, अपि—इत्येते विंशतिरुपसर्गसंज्ञाः। ते च इतराभ्याम् नामाख्याताभ्यामिति यावत् सह अर्थवाचकाः अर्थवाचिनः, न तु केवला इत्यर्थः।

इतरे नामाख्यातोपसर्गेभ्योऽन्ये निपाता वेदितव्याः। अ, उ, वा, घ, शश्वत्, कुवित्, सकृत्, अथ, अथो इत्येवमादयः।

विंशतेरुपसर्गाणामुच्चा एकाक्षरा नव।
आद्युदात्ता दश तेषामन्तोदात्तस्त्वभीत्ययम्॥ ७॥

विंशतेरुपसर्गाणां मध्ये एकाक्षरा ये नव नवसंख्यकाः प्र, आ, निः, दुः, वि, सं, नि, सु, उत्—इत्येते इति यावत् ते उच्चा उदात्ता इत्यर्थः।

एतेषामुपसर्गाणां दश परा, अनु, उप, अप, परि, प्रति, अति, अधि, अव, अपि इत्येते इति यावत् आद्युदात्ताः।

तेषामुपसर्गाणां मध्ये 'अभि' इत्ययम् एक एव अन्तोदात्तः।

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥८॥

निपातानामर्थवशान्निपातनाद्
अनर्थकानामितरे च सार्थकाः ।
नेयन्त इत्यस्ति संख्येह वाङ्मये
मिताक्षरे चाप्यमिताक्षरे च ये ॥ ९ ॥

अर्थविशेषे केचन निपाता निपातिताः, तथाच--केचन निपाताः सार्थकाः केचन च निरर्थकाः । परम् इयत्तया ते मिताक्षरे पद्ये अमिताक्षरे गद्ये च संख्यातुं न शक्याः ।

## त्रयोदशं पटलम्

वायुः प्राणः कोष्ठ्यमनुप्रदानं
कण्ठस्य खे विवृते संवृते वा ।
आपद्यते श्वासतां नादतां वा
वक्त्रीहायामुभयं वान्तरोभौ ॥ १ ॥

प्राणो वायुः । कोष्ठमुदरम् । कोष्ठे भवं कोष्ठ्यम् । वायुम् अनुप्रदीयते इत्यनुप्रदानम् प्रयत्न इत्यर्थः । कण्ठस्य ग्रीवायाः

खे गलस्य बिले छिद्रे विवृते विपुले विशाले महति सति, संवृते सङ्कुचिते संश्लिष्टे अल्पे वा सति वक्त्रीहायां वक्तुरीहायां चेष्टायां श्वासतां नादतां वा यथाक्रममापद्यते। स वायुः कण्ठबिले विवृते श्वासत्वमापद्यते, संवृते तु नादत्वम् इति निष्कृष्टार्थः।

उभौ विवृतसंवृतौ अन्तरा कण्ठबिले समे सति उभयं श्वासनदावापद्यते।

ता वर्णानां प्रकृतयो भवन्ति
श्वासोऽघोषाणामितरेषां तु नादः।
सोष्मोष्मणां घोषिणां श्वासनादौ
तेषां स्थानं प्रति नादात् तदुक्तम् ॥२॥

ताः खलु एताः श्वासनादोभयात्मिकाः तिस्रः सर्व्ववर्णानां प्रकृतयो भवन्ति।

केषां वर्णानां का प्रकृति रित्युच्यते श्वासेति। अघोषाणां वर्णानां श्वासः प्रकृतिर्भवतीति वेदितव्यम्। इतरेषां च घोषवतामिति यावत् नादः प्रकृर्भिवतीति वेदितव्यम्। सोष्माणो ये घोषिणः वर्गचतुर्थाः घ झ ढ ध भ इत्येते इति यावत् तेषां, ऊष्मणां मध्ये च यो घोषः हकार इति यावत् तस्य च श्वासनादौ प्रकृतिर्भवत इति वेदितव्यम्।

तेषां श्वासनादोभयानां स्थानं प्रति यद् वक्तव्यं तदेतत् नादात् नादे नादव्याख्याने इत्यर्थः व्याख्यातम् 'नादः परोऽभिनिधानाद्-ध्रुवं तत्कालस्थानम्' (६।११) इति। एवं श्वासादीनि त्रीणि वर्णकालस्थानानि नाधिकस्थानानि न वा न्यूनस्थानानि।

तद्विशेषः करणं स्पृष्टमस्थितं
दुःस्पृष्टन्तु प्रागघकाराच्चतुर्णाम्।

**स्वरान् स्वारोष्मणामस्पृष्टं स्थितं**

**नैके कण्ठास्य स्थितमाहुरूष्मणः ॥ ३ ॥**

तेषां विशेषः करणमित्युच्यते। एतच्च पाणिनिसम्मताभ्यन्तर-प्रयत्न इति प्रतिभाति।

स्पृष्टं करणं स्पर्शानाम्। तच्च अस्थितमिति वेदितव्यम्। दुःस्पृष्ट-मीषत्स्पृष्टमित्यर्थः। हकारात् प्राक् चतुर्णां वर्णानां यरलवाना-मिति यावत् दुस्पृष्टं करणं वेदितव्यमित्यर्थः।

स्वराणाम्, अनुस्वारस्य, ऊष्मणां च अस्पृष्टं करणं वेदितव्यम्। तच्च स्थितमित्युच्यते। यत्र वर्णस्थानमाश्रित्य जिह्वावतिष्ठते तत् स्थितमित्युच्यते।

एके आचार्य्याः कण्ठास्य ऊष्मणः हकारस्य विसर्जनीयस्य च इति यावत् अस्पृष्टं करणं न मन्यन्ते।

**प्रयोक्तुरीहागुणसन्निपाते**

**वर्णीभवन् गुणविशेषयोगात्।**

**एकः श्रुतीः कर्म्मणाप्नोति बह्वी**

**रेके वर्णाञ्च् क्षाश्वतिकान् न कार्य्यान् ॥४॥**

प्रयोक्तुर्वक्तुरीहा एव गुणः तेन सन्निपाते योगे सति एको वायुः गुणविशेषयोगात् गुणविशेषाः अनुप्रदानसंसर्गस्थानकरणपरिमाणास्तैः सह संयोगात् कर्म्मणा क्रियया बह्वीः श्रुतीः बहूनि रूपाणि प्राप्नोति। तथा च वर्गे वर्गे तुल्यस्थानानां तुल्यकरणानामपि प्रथम-तृतीयवर्णानाम् अनुप्रदानकृतः घोषाघोषरूप श्रुतिविशेषो भवति। उक्तञ्च तैत्तिरीयप्रातिशाख्ये 'अनुप्रदानात् संसर्गात् स्थानात्

करणविभ्रमात्। जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्' (२।११)
इति।

एके आचार्या अकारादीन् वर्णान् शाश्वतिकान् नित्यान् नतु कार्य्यान् अनित्यान् इत्यर्थ: आहु:।

आहुर्घोषं घोषवतामकारम्
एकेऽनुस्वारमनुनासिकानाम्।
सोष्मतां च सोष्मणामूष्मणाहु:
सस्थानेन घोषिणां घोषिणैव ॥ ५ ॥

घोषवतां वर्णानां योऽकार: तं घोषमाहुरेके आचार्या इति शेष:। तथा ते एव चाचार्या अनुनासिकानां वर्णानां योऽनुस्वारस्तमपि घोषमाहुरित्यर्थ:।

सोष्मणां वर्णानां सोष्मत्वं सस्थानेन समानोच्चारणस्थानेनोष्मणा आहु:। यथा,—छकारस्य सोष्मत्वं छकारसमानस्थानशकारेणैव।

घोषिणाम् सोष्मत्वं घोषिणा घोषवता ऊष्मणा हकारेणेति यावत् भवतीत्यर्थ:।

अत्रोत्पन्नावपर ऊष्मघोषौ
शीघ्रतरं सोष्मसु प्राणमेके।
रक्तो वचनो मुखनासिकाभ्याम्
एतद्वर्णात्मगुणशास्त्रमाहु: ॥ ६ ॥

अत्रैव सोष्मसु घोषवत्सु च ऊष्मघोषौतो उत्पन्नो स्वत इत्यर्थ: इत्यपरे आचार्या आहु:। यदुक्तम् अकारो घोषवतां घोषत्वं जनयति

अनुस्वारोऽनुनासिकानामिति, सोष्मणां चोष्मा सोष्मत्वमिति तन्न। कस्मात्—एवमुच्यमाने सति वर्णानामनित्यत्वं प्रसज्येत।

सर्वेषु वर्णेषु स्थानकरणानुप्रदानानि त्रयो गुणाः समानाः, सोष्मसु च ऊष्मा गुणोऽधिकः। तत्र गुणबहुत्वात् मात्राकालेन शीघ्रत्वाद् ऋते न शक्यम् उच्चारयितुम् इति तेषां शीघ्रतरं प्राणं मन्यन्ते।

पदकारेणाप्युक्तम् प्रथमद्वितीयाः श्वासानुप्रदाना अघोषाः, एके अल्पप्राणाः अपरे महाप्राणाः। तृतीयचतुर्था घोषवन्तः, एकेऽल्पप्राणा अपरे महाप्राणाः' इति। सोष्मसु महाप्राणं विदधत् एतमेवार्थम् आह।

मुखेन नासिकया च यदुच्यते स रक्तो वेदितव्यः। ङ ञ ण न म इति।

एतद् वायुः प्राण इत्येवमादि यदनुक्रान्तं तत् वर्णानाम् आत्मगुणशासनं वेदितव्यम्। तथाच एतावन्तो वर्णात्मगुणाः—श्वासता, नादता, उभयता, स्पृष्टता, दुःस्पृष्टता, अस्पृष्टता, कण्ठबिलस्य विवृतता, संवृतता, अघोषता, घोषता, सोष्मता, अनुनासिकता चेति।

**नपुंसकं यदूष्मान्तं तस्य बह्वभिधानजः।**
**अनुस्वारो दीर्घपूर्वः सिष्यन्तेषु पदेषु सः॥ ७॥**

नपुंसकलिङ्गं यच्छब्दस्वरूपम् ऊष्मान्तं तस्य बह्वभिधानजः बहुवचनोत्पन्नः दीर्घपूर्वोऽनुस्वारो वेदितव्यः। सि षि इत्येवमन्तेषु च पदेषु स द्रष्टव्यः। यथा—भासांसि, चक्षूंषि इत्यादि। किमर्थमनुस्वारस्य दीर्घपूर्वस्य पदमध्ये वर्त्तमानस्य बहुभिः पदैर्लक्षणं क्रियते, ननु पाठादेव सिद्धं यथान्येषां वर्णानाम्। सत्यम्। किन्तु दुराम्नाननिवृत्त्यर्थमनयोः शिक्षापटलयोर्बहूणां वर्णानां लक्षणं क्रियते। तथाच—केचिदनुस्वारस्य स्थाने तावत् ङकारं जनयन्ति, तस्मात् ङकारात् परं ककारमन्तःपातं जनयन्ति, ककारात् परं

षकारमपरे जनयन्ति—हवीङ्क्षि इत्येवंरूपः। तन्निवृत्त्यर्थमनुस्वार-लक्षणं क्रियते। किमर्थं दीर्घपूर्वो गृह्यते न ह्रस्वपूर्वः? तत्र तावदाहुः दीर्घस्य यथाऽव्यक्त-ङकारश्रुतिर्न तथा ह्रस्वपूर्वस्य। तस्मान्न गृह्यते। अपरे आहुः—अनुस्वारस्योपधां ह्रस्वां केचिद् द्राघयन्त इव पठन्ति। तन्निवृत्त्यर्थं दीर्घपूर्वः परिगृह्यते।

**सः सा सौ संपदान्तेभ्यः पूर्वो नामुपधस्तथा।**

**यकारो वा वकारो वा पुरस्ताच्चेदसन्धिजः ॥८॥**

सः, सा, सौ, सम्—इत्येतेभ्यः पदान्तेभ्यः पूर्वोऽनुस्वारः अनामुप-पधः अकाराकारोपध इत्यर्थः तथा यथा सिध्यन्तेषु पूर्वेषु दीर्घपूर्वः एवमिहापि दीर्घपूर्वो वेदितव्यः। तस्माद् अवर्णात् पूर्वः चेत् असन्धिजो यकारो वा वकारो वा भवति। यथा—सा साह्वांसो दस्युम् ( ऋ ८।४१।२ ), श्रेयांसं दक्षम् ( ऋ, १०।३१।२ )।

**जिघांसन् पांसुरे मांसं पुमांसं पौंस्यमित्यपि।**

**पदेष्वेवंप्रवादेषु नामकार उपोत्तमे ॥ ९ ॥**

जिघांसन्, पांसुरे, मांसं, पुमांसं, पौंस्यम्—इत्येतेषु पदप्रवादेषु पदरूपभेदेषु अनुस्वारो दीर्घपूर्वो वेदितव्यः। यथा—जिघांसम्, जिघांससि इत्यादि।

जिघांसादीनामुपोत्तमे पुमांसमित्येतस्मिन्निति यावत् अमकारे सति अनुस्वारो दीर्घपूर्वो न भवति ह्रस्वपूर्व एव भवति। यथा—पुंसः।

**प्रश्लिष्टादभिनिहितान्मांश्चत्वेऽयांसमितापि।**

**एतावान्दत्त्वनुस्वारो दीर्घादितरथेतरः ॥ १० ॥**

प्रश्लिष्टादेकीभावात् अभिनिहिताच्च परोऽनुस्वारः पदे ह्रस्वपूर्वः सन् संहितायां दीर्घपूर्वो भवति। यथा—'आ | भूतऽ अंशः |

इत्यत: आ भूतांश: (ऋ १०।१०६।११), 'हवामहेऽ अंहोमुचम्' इतयत: हवामहेऽंहोमुचम् ( ऋ १०।६३।८ )।

मांश्चत्वे, अयांसम् इतेयतयोश्चानुस्वारो दीर्घपूर्वौ वेदितव्यः ।

'नपुंसकं यदूष्मान्तम्' ( १३।७ ) इतेयत्रमादिर्योऽयमनुस्वारोऽनुक्रान्त: एतावानेव ऋत्तु पदमध्ये दीर्घात् परा वेदितव्य:। इतरथा उक्तात् दीर्घपूर्वात् विषयात् अन्यत्र ऋत्तु पदमध्ये इतर: ह्रस्वपूर्वोऽनुस्वारो वेदितव्यः।

समापाद्यानुत्तरे षट् पकारे
राधो रथो ग्ना दिवो जा ऋतश्च ।
अञ्जःपा दुःप्रेति च पूर्वपद्या-
वनिङ्गयन् विक्रममेषु कुर्य्यात् ॥ ११ ॥

पकारे उत्तरे परभूते सति राध:, रथ:, ग्ना:, दिव:, जा:, ऋत: इतेयतानि षट् पदानि 'अञ्ज:पा,' 'दु:प्र' इतेयतो च पूर्वपद्यभूतानि समापाद्यानि भवन्ति उपाचरितानि भवन्तोतयर्थ:। एतेषु विक्रमं कुर्य्यात् अनिङ्गयन् अवग्रहमकुर्वन् पदपाठे इति शेष: अर्थात् पदपाठे उपाचारमपनीय विसर्जनीयं कुर्य्यात् अवग्रहमकुर्वन्नितयर्थ:। यथा—त्वंहि राधस्पते ( ऋ ८।६१।१४ ), पदपाठे 'राध:पते।' अञ्जस्पा इत्र ( ऋ १०।८४।१३ ), पदपाठे तु अञ्ज:पा:ऽ इव।

समापाद्यं नाम वदन्ति षत्वं
तथा णत्वं सामवशांश्च सन्धीन् ।
उपाचारं लक्षणतश्च सिद्धम्
आचार्य्या व्यालिशाकल्यगार्ग्याः ॥ १२ ॥

षत्वं, णत्वं, सामवशान् सन्धीन्, लक्षणतः सिद्धम् उपाचारञ्च व्यालिशाकल्यगार्ग्या इत्येते आचार्या समापाद्यमित्याहुः ।

**ह्रस्वामर्द्धस्वरभक्त्या समासाम्**

**अनुस्वारस्योपधामाहुरेके ।**

**अनुस्वारं तावतैवाधिकं च**

**ह्रस्वोपधं दीर्घपूर्वं तदूनम् ॥ १३ ॥**

ह्र६ मनुस्वारोपधाम् अर्द्धस्वरभक्त्या पादमात्रया अर्द्धपादमात्रया वा असमाप्तां न्यूनाम्, ह्रस्वोपध-मनुस्वारं च तावता कालेन अधिक माहुरेके आचार्याः ।

दीर्घपूर्वमनुस्वारं तयैव अर्द्धस्वरभक्त्या न्यूनमाहुः । दीर्घामुपधां च तावता ३४ऽकाम् ।

**रेफोऽस्त्यृकारे च परस्य चार्द्धे**

**पूर्व्वे ह्रसीयांस्तु नवेतरस्मात् ।**

**मध्ये स तस्यैव लकारभावे**

**धातौ स्वरः कल्पयताव्लृकारः ॥ १४ ॥**

ऋकारे रेफो विद्यते, परस्य दीर्घस्य ऋकारस्य च पूर्वेऽर्धे रेफो विद्यते । ह्रसीयांस्तु ह्रस्वतरः स रेफः इतरस्मादृकाररेफादल्पतरः, न वा ह्रसीयान् सम एव वा । स रेफस्तस्य ऋवर्णस्य मध्ये द्रष्टव्यः, नादौ नान्ते ।

तस्य ऋवर्णस्य स्थाने रेफस्य लकारभावे यदा स रेफो लकार-मापद्यते तदा लृकारो भवति, स्वरसंज्ञश्च भवति कल्पयताविव धातौ । तथाच—तेन चाक्लृप्र ऋषयो मनुष्याः ( ऋ° १०।१३०।५ ) इत्यत्र

स्वरात् ककारस्य द्विवचनं न भवति, असंयोगादित्वात्। पकारस्य द्वित्वं भवति स्वरोपधत्वात्।

**अनन्तस्थं तमनुस्वारमाहु-**
**र्व्यालिर्नासिक्यमनुनासिकं वा।**
**सन्ध्यानि सन्ध्यक्षराण्याहुरेके**
**द्विस्थानतैतेषु तथोभयेषु ॥ १५ ॥**

योऽसौ पुरस्तादविशेषेणानुक्रान्तोऽनुस्वार 'एतावानृच्नुस्वारो दीर्घात्' (१३।१०) इति तमनुस्वारम् अनन्तस्थं पदमध्ये वर्त्तमान-माहुराचार्य्या इत्यर्थः।

व्यालिराचार्य्यः सर्वमनुस्वारं नासिकास्थानं मुखनासिकास्थानं वा मन्यते।

एके आचार्य्या सन्ध्यक्षराणि सन्ध्यानि सन्धितव्यानि सन्धिजानि च आहुः। यथान्यान्यक्षराणि स्वयमुत्पन्नानि न तथेमानि। तथाच एतेषु उभयेषु सन्ध्यक्षरेषु द्विस्थानता कण्ठतालुस्थानता कण्ठोष्ठस्थानता च।

**सन्ध्येष्वकारोऽर्द्धमिकार उत्तरं**
**युजोरुकार इति शाकटायनः।**
**मात्रासंसर्गादवरेऽपृथक्श्रुती**
**ह्रस्वानुस्वारव्यतिषङ्गवत् परे ॥ १६ ॥**

सन्ध्येषु सन्ध्यक्षरेषु अकारः पूर्वार्द्धं भवति ; इकार इवर्ण इति यावत् उत्तरार्द्धं भवति ए ऐ इति प्रथमतृतीययोरिति शेषः। युजोर्युग्मयोः द्वितीयचतुर्थयोः ओ औ इत्येतयोरिति यावत् उकार उवर्ण

इति यावत् उत्तरार्द्धं भवति एवं शाकटायन आचार्य्यो मन्यते इत्यर्थः। तथाच—अ + इ = ए, अ + उ = ओ, अ + ई = ऐ, अ + ऊ = औ।

अवरे पूर्वे 'ए, ओ' इत्येते इति यावत् मात्रासंसर्गात् मात्रयोः समयोः चीरोदकवत् संसर्गात् न ज्ञायते क्वावर्णमात्रा, क्व वा इवर्णोवर्णयोरिति। तस्मात् ते अक्षरे अपृथक्श्रुती भवतः। ए, ओ इत्येतयोः इवर्णोवर्णयोः पृथक् श्रवणं न विद्यते इत्यर्थः।

परे सन्ध्यक्षरे ऐ, औ इत्येतयोरिति यावत्, ह्रस्वानुस्वारयोर्यो व्यतिषङ्गोऽनुक्रान्तः 'ह्रस्वामर्द्धस्वरभक्त्यासमासाम्' (१३।१३) इति, तद्वत् व्यतिषङ्गो वेदितव्यः; यथा तत्र ह्रस्वानुस्वारः पादमात्राधिक उपधा च तावता न्यूना, एवम् इहापि द्रष्टव्यम्; इवर्णोवर्णयोर्भूयसी मात्रा, अल्पीयस्यवर्णस्य। यस्मात्तयोर्वैषम्यात् न चीरोदकवत् संसर्गो भवति तस्मात्तयोरवर्णस्य चेवर्णोवर्णयोश्च पृथक् श्रवणं भवति।

**त्रीणि मन्द्रं मध्यममुत्तमं च**
**स्थानान्याहुः सप्त यमानि वाचः।**
**अनन्तरश्चात्र यमोऽविशेषः**
**सप्त स्वरा ये यमास्ते पृथग् वा ॥ १७ ॥**

वाचः त्रीणि स्थानानि सप्तयमानि सप्त यमा येषु स्थानेषु तानि सप्तयमानीत्याहुराचार्य्या इत्यर्थः। ते च स्थानानि मन्द्रं, मध्यमम्, उत्तमञ्च। तेषु मन्द्रमुरसि वर्त्तते, मध्यमं कण्ठे वर्त्तते, उत्तमं च शिरसि वर्त्तते।

अत्रैषु स्थानेषु अनन्तरोऽव्यवहितो यमः अविशिष्टो भवति। अनन्तरे यमे विशेषो न शक्यते दर्शयितुमित्यर्थः।

ये सप्त स्वराः षड्जऋषभगान्धारादयो गान्धर्ववेदे समाम्नाता ये

वा क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्य्या इति सामसु निगदितास्ते यमा इति वेदितव्याः।

अथवा स्वरेभ्यः पृथग्भूता अन्ये यमाः स्वरेष वर्त्तन्ते।

**तिस्रो वृत्तीरुपदिशन्ति वाचो**

**विलम्बितां मध्यमां च द्रुतां च।**

**वृत्त्यन्तरे कर्म्मविशेषमाहु**

**र्मात्राविशेषः प्रतिवृत्त्युपैति॥ १८॥**

वाचस्तिस्रो वृत्तीरुपदिशन्ति आचार्य्याः। ताश्च विलम्बिता, मध्यमा, द्रुता च।

वृत्त्यन्तरे वृत्तिविशेषे कर्म्मविशेषमाहुः। तथा च, विलम्बितायां वृत्तौ प्रातःसवनं भवति, मध्यमायां माध्यन्दिनं सवनं द्रुतायां च तृतीयं सवनं भवतीति ज्ञेयम्।

प्रतिवृत्ति च मात्राविशेषो मात्राधिक्यम् उपैति। तथाच, द्रुतायां वृत्तौ ये वर्णास्ते मध्यमायां त्रिभागाधिका भवन्ति, तथा मध्यमायां ये वर्णास्ते विलम्बितायां त्रिभागाधिकाः चतुर्भागाधिका वा भवन्तीति नियमः।

**अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्।**

**शिष्याणामुपदेशार्थे कुर्य्याद् वृत्तिं विलम्बिताम्॥१९॥**

**चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्।**

**शिखी त्रिमात्रो विज्ञेय एष मात्रापरिग्रहः॥ २०॥**

## चतुर्दशं पटलम्

समुद्दिष्टा वर्णगुणाः पुरस्तान्-
निर्द्दिष्टानां सांहितो यश्च धर्म्मः ।
तदायापायव्यथनानि दोषा—
स्तान् व्याख्यास्यामोऽत्र निदर्शनाय ॥१॥

पुरस्तात् निर्द्दिष्टानां वर्णानां ये गुणाः श्वासत्वादिकाः ते समुद्दिष्टाः सांहितः संहिताविषयको यो धर्म्मः सोऽपि समुद्दिष्टोऽनुक्रान्तेषु पटलेषु इत्यर्थः ।

तेषां वर्णानाम् आयोऽपायव्यथनमितिश्रुते दोषाः प्रादुर्भवन्ति । आयो नामासतो वर्णस्य उपजनः अपायो नामसतोऽपकर्षः । व्यथनं नाम सतोऽन्यथाश्रवणम् । ते च दोषः पटलेऽत्रव्याक्रियन्ते ।

निरस्तं स्थानकरणापकर्षे
विहारसंहारयोर्व्यासपीड़ने ।
ओष्ठाभ्यामम्बूकृतमाह नद्धं
दुष्टं मुखेन सुषिरेण शूनम् ॥ २ ॥

स्थानकरणयोरपकर्षेण निरस्तं नाम दोष उत्पद्यते ।

स्थानकरणयोर्विहारे विस्तारे इत्यर्थः व्यासो नाम दोषो जायते । संहारे सङ्कोचने इत्यर्थः पोड़नं च नाम ।

वक्ता ओष्ठाभ्यां नद्धं बद्धं यदाह तदम्बूकृतं नाम दुष्टं दोषमाह ।

सुषिरेण विलम्बितेन विस्फारितेनेतरथैः मुखेन वक्ता यदाह तद्दृष्टं शून्यं नाम वेदितव्यम्।

सन्दष्टं तु व्रीडन आह हन्वोः
प्रकर्षणे तद् विक्लिष्टमाहुः।
जिह्वामूलनिग्रहे ग्रस्तमेतन्
नासिकयोस्त्वनुसङ्गेऽनुनासिकम् ॥ ३ ॥

हन्वोः व्रीडने नीचैर्भावे सन्दष्टं नाम दोषो भवति।

हन्वोः प्रकर्षणे सर्वतश्चलने विक्लिष्टं नाम दोषो भवति। विक्लिष्टं नाम असंयुक्तम्।

जिह्वामूलस्य निग्रहे स्तम्भने ग्रस्तं नाम दोषो भवति।

नासिकयो र्यदा वर्णोऽनुपज्यते तदा अनुनासिकं नाम दोषो भवति।

अयथामात्रं वचनं स्वराणां
सन्दंशो व्यासः पीड़नं निरासः।
ग्रासः कण्ठ्ययोरनुनासिकानां
सन्दष्टता विषमरागता च ॥ ४ ॥

मात्रामनतिक्रम्य यथामात्रं तन्न भवतीत्ययथामात्रम्। स्वराणां ह्रस्वदीर्घप्लुतानाम् अयथामात्रं वचनम् उच्चारणं दोषो भवति।

सन्दंशः, व्यासः, पीड़नं, निरासः—इत्येते च दोषा ये पूर्वं द्वितीय-तृतीयश्लोकयो र्निर्दिष्टास्ते स्वराणां भवन्ति।

'जिह्वामूलनिग्रहे ग्रस्तमेतत् ( १४।३ ) इति यः प्रागुक्तः ग्रासो नाम दोषः स कण्ठ्ययोरकाराकारयोरुत्पद्यते।

अनुनासिकानां वर्णानां सन्दष्टता नाम दोषो भवति। विषमरागता च समरागता न भवतीतयर्थः।

सान्तःस्थानामादिलोपान्तलोपा—
वदेशे वा वचनं व्यञ्जनस्य।
अन्योन्येन व्यञ्जनानां विरागो
लेशेन वा वचनं पीड़नं वा ॥ ५ ॥

अन्तःस्थया सह वर्त्तन्ते इति सान्तःस्थास्तेषां सान्तःस्थानां वर्णानां क्वचिद् आदिलोपः क्रियते क्वचिदन्तलोपः। तौ दोषौ ज्ञेयौ। यथा—'पिबा ह्यस्य' इत्यत्र 'पिबा यस्य।' 'इन्द्रवायू' रितयत्र 'इन्द्र वायोः'।

अथवा अदेशे अस्थाने व्यञ्जनस्य वचनम्। स दोषः। यथा—'उत्स्नाय' (ऋ २।१५।५) इतयत्र 'उत्स्नाय' इतीव' सकारात् परस्तकार उच्यते।

व्यञ्जनानामन्योनेन विरागः लोपः क्रियते। स च दोषो भवति। उप मा षड् द्वाद्वा (ऋ ८।६८।१४) इतयत्र 'उपमा षड् वाद्वा' इतीव' डकारात् परस्य दकारस्य विरागः क्रियते।

लेशेन प्रयत्नशैथिल्येन व्यञ्जनानां वचनम् उच्चारणं क्रियते, व्यञ्जनानां पीड़नमतिप्रयत्नेनोच्चारणं च क्रियते। तावुभौ दोषौ भवतः।

घोषवतामनुनादः पुरस्ताद्
आदिस्थानां क्रियते धारणं वा।
सोष्मोष्मणामनुनादोऽप्यनादो
लोमश्यं च क्ष्वेड़नमूष्मणां तु ॥ ६ ॥

पदादिस्थानां घोषवतां पुरस्तादनुनादः ध्वनिः क्रियते अथवा तेषां घोषवतां धारणम् अनुपलब्धिः क्रियते। तौ च दोषौ भवतः। यथा—ह्वयामीत्यत्र पुरस्तात् अधिकः शब्दः क्रियते (अ)ह्वयामीत्येवंरूपः। अथवा तस्य दोषस्य परिहारार्थं हकारस्य अनुपलब्धिरनुच्चारणं क्रियते। अपरे धारणं द्विर्वचनं मन्यन्ते। तथाच— ज्योतिष्कृत् इत्यत्र ज्ज्योतिष्कृत् इति पठन्ति केचित्।

सोष्मणामूष्मणां च पुरस्तात् पदादिस्थानात् अनादोऽशब्दः अनुनादश्च क्रियते।

ऊष्मणां घोषाणां लोमश्यम् असौकुमार्यं चेडनम् अधिकः वर्णस्य स्वरूपो ध्वनिः—एतौ द्वौ दोषौ भवतः।

वर्गेषु जिह्वाप्रथनं चतुर्षु
ग्रासो मुख्ये प्रतिहारश्चतुर्थे।
सरेफयोर्मध्यमयोर्निरासो
विक्लेशः स्थाने सकले चतुर्थे ॥ १ ॥

आद्येषु चतुर्षु वर्गेषु जिह्वायाः प्रथनं विस्तारः क्रियते। स च दोषः।

एतेषां वर्गाणां मुख्ये आद्ये वर्गे कवर्गे इति यावत् ग्रासो नाम दोषो भवति। स च इतः पूर्वमेव व्याख्यातः।

एतेषामेव चतुर्थे वर्गे प्रतिहारः अतिप्रयत्नो नाम दोषो भवति।

सह रेफेण वर्त्तेते इति सरेफौ। एतेषां चतुर्णां वर्गाणां यौ मध्यमौ वर्गौ चवर्गटवर्गौ इति यावत् तयो रेफस्य च निरासो नाम दोषो भवति। स च व्याख्यातपूर्वः।

चतुर्थे वर्गे पवर्गे इति यावत् सकले सकलावयवे करणादिषु स्थाने च इति यावत् विक्लेशः अवैशद्यमिति दोषो भवति।

अतिस्पर्शो बर्बरता च रेफे
जिह्वान्ताभ्यां च वचनं लकारे ।
श्वासोऽघोषनिभता वा हकारे
निरासोऽन्येषूष्मसु पीडनं वा ॥ ८ ॥

रेफे अतिस्पर्शो दुस्पृष्टा रेफः सोऽतिस्पृश्यते इत्यर्थः बर्बरता असौकुमार्य्यं च भवतः ।

जिह्वाग्रेण वक्तव्यो लकारः । स यदा जिह्वाया अन्ताग्राभ्यामुच्यते तदा तस्य जिह्वान्ताभ्यां वचनं नाम दोषो भवति । अतिस्पर्शो बर्बरता—एतौ च दोषौ पूर्वोक्तौ तस्य भवतः—इति चकारार्थः ।

श्वासो वा अधिकः अघोषसदृशत्वं वा हकारस्य दोषौ लक्षयेत् ।

हकारादन्येषु ऊष्मसु शकारादिषु इति यावत् निरासः पीडनं वा इति द्वौ दोषौ भवतः ।

स्वरात् परं पूर्वसस्थानमाहु-
र्दीर्घान्निरस्तं तु विसर्जनीयम् ।
कण्ठाद् यथा रेफवतस्तथाहू
रक्तात्तु नासिक्यमपीतरस्मात् ॥ ९ ॥

दीर्घात् स्वरात् परं विसर्जनीयं पूर्वस्य सस्थानं निरस्तं निरासदोषयुक्तं यथा स्यात् तथा आहुः । स च दोषः ।

दीर्घात् कण्ठ्यात् आकारादिति यावत् परं विसर्जनीयं यथा रेफवत ऋकारात् इति यावत् परं जिह्वामूलीयं तथा निरस्तमाहुः स दोषः ।

रक्तात् कण्ठ्याद्घोषात् परं विसर्जनीयम् इतरस्मादपि परं रक्ताद् ऋकारादिति यावत् नासिक्यमाहुः स दोषः ।

संयोगादेरूष्मणः पूर्व्वमाहु-
विसर्जनीयमधिकं स्वरोपधात् ।
परं यमं रक्तपरादघोषाद्
ऊष्माणं वा घोषिणस्तत्प्रयत्नम् ॥ १० ॥

स्वरोपधात् संयोगादेरूष्मणः पूर्वमधिकं विसर्जनीयमाहुः स दोषः । तथा—पावक ते(:) स्तोकाश्चोतन्ति ( ऋ ३।२१।२ ), अभि (:) ष्याम ( ऋ १०।१३२।२ )।

ऊष्मणोऽघोषात् रक्तपरात् परं यममाहुः स दोषः । यथा— पृश्न्(श्नँ) निः, विष्(ष्णँ) णुः इत्यादि ।

घोषिण ऊष्मणो रक्तपरात् परं घोषिणं पूर्वतुल्यप्रयत्नम् ऊष्माणं यमं वा आहुः । स दोषः ।

शुनश्शेपो निष्षपी शास्सि निष्षाल्
विक्रमान् ब्रह्म विष्णु स्म पृश्निः ।
स्पर्शोष्मसन्धीन् स्पर्शरेफ-
सन्धीनभिप्रायांश्च परिपादयन्ति ॥ ११ ॥

शुनश्शेपः, निषष्पी, शास्सि, निष्पाल्, ब्रह्म, विष्णु, स्म, पृश्नि—इत्येते अविक्रमा भवन्ति । एतेषु क्रमो विसर्जनीयः स दोषो वर्ज्यः ।

स्पर्शोष्मसन्धीन्, स्पर्शरेफसन्धीन्, अभिप्रायांश्च परिपादयन्ति एतेषु अनुस्वारं कुर्वन्तीत्यर्थः । स च दोषः । यथा—ताँस्ते अश्याम इत्यत्र

तांस्ते अश्याम इति, रश्मीरिव इत्यत्र रश्मोरिव इति, पीवो अन्नाँ रयिवृध इत्यत्र पीवो अन्नामिति च पठन्ति।

स्वरौ कुर्वन्त्योष्ठ्यनिभौ सरेफौ-
तिस्रो मातॄस्त्रीन् पितॄन् यन्नृभिर्नॄन् ।
दन्त्यान् सकारोपनिभानघोषान्
रथ्यः पृथ्वी पृथिवी त्वा पृथीति ॥ १२ ॥

सरेफौ स्वरौ ऋ, ॠ इत्येतौ इति यावत् ओष्ठ्यनिभौ उवर्णसदृशौ कुर्वन्ति। स दोषः। यथा—तिस्रो मातॄ स्त्रीन् पितॄन् (ऋ॰ १।१६४।१०), यन्नृभिर्नॄन् (ऋ॰ ६।२५।२)।

दन्त्यान् अघोषान् सकारोपनिभान् सकारसदृशान् कुर्वन्ति। स दोषः। यथा—रथ्यः, पृथ्वी, पृथिवी, त्वा, पृथी—इत्येवमादिषु।

ऊष्मान्तःस्थाप्रत्ययं रेफपूर्वं
ह्रस्वं लुम्पन्त्याहुरथाप्यसन्तम् ।
पुरुषन्तिं पुरुवारार्यमाघ्राम्
हरियोजनाय हरियूपीयायाम् ॥ १३ ॥

ऊष्मान्तःस्थाप्रत्ययम् ऊष्मा अन्तःस्था च प्रत्ययः परभूतो यस्य तत् तथाभूतं रेफपूर्वं ह्रस्वं लुम्पन्ति नाशयन्ति अथवा असन्तमविद्यमानं ह्रस्वं रेफात् परमाहुरुत्पादयन्ति। उभौ तौ दोषौ परिवर्जनीयौ। यथा—पुर् (उ) षन्तिम् (ऋ॰ १।११२।२३), पुर् (उ) वार (ऋ॰ ४।२।२०), अर् (इ) यमा (ऋ॰ १।१३६।३), आघ्राम् (ऋ॰ १०।१६५।३), हर् (इ) योजनाय (ऋ॰ १।६२।१३), हरियू-पीयायाम् (ऋ॰ ६।२७।५), एतेषु अर्यमा, आघ्राम् इत्येतयोरसन्तमाहुरन्येषु लुम्पन्ति।

**ऐयेरित्यैकारमकारमाहु-**
**र्वैयश्वे च क्रमयन्तो यकारम् ।**
**तदेवान्येषु विपरीतमाहु-**
**स्तेरय्या वय्यं च हृदय्ययेति च ॥ १४ ॥**

'ऐयेः' इत्यत्र 'वैयश्वे' इत्यत्र च ऐकारस्थाने अकारम् आहुः यकारं क्रमयन्तः द्विरुच्चारयन्तः, तौ दोषौ । यथा—ऐयेः ( ऋ॰ ५।२।८ ) इत्यत्र अयेरः, वैयश्वस्य ( ऋ॰ ८।२६।११ ) इत्यत्र वय्यश्वस्य इति । तद्दोषद्वयमन्यपदेषु विपरीतमाहुः अकारस्थाने ऐकारं यकारमक्रमयन्त इत्यर्थः, तौ दोषौ । यथा—तेरय्या ( ऋ॰ १०।१८।७ ), वय्यं ( ऋ॰ ८।६८।८ ), हृदय्ययाकुल्या ( ऋ॰ १०।१५१।४ ) इत्यत्र यथाक्रमं 'तेरैया', 'वैयम्', हृदैयया' इत्येतानि ।

**अकारस्य स्थान ऐकारमाहु-**
**र्लुम्पन्ति च सयमीकारमुत्तरम् ।**
**बह्वक्षरं ह्यक्षरतां नयन्ति**
**यथोनयीर्ध्वनयीत् कोशयीरिति ॥ १५ ॥**

येन यकारेण सह वर्त्तते इति सयः । तं सयम् । अकारस्थाने ऐकारमाहुः सयं यकारसहितम् ईकारं च लुम्पन्ति । किञ्च बह्वक्षरं सन्तं ह्यक्षरतां नयन्ति इत्येते दोषा भवन्ति । यथा—'ऊनयीः' इत्यात्र ऊनैः ( ऋ॰ १।५३।३ ), 'ध्वनयीत्' इत्यत्र 'ध्वनैत्' ( ऋ॰ १।१६२।१५ ), 'कोशयीः' इत्यत्र कोशैः ( ऋ॰ ६।४७।२२ ) ।

२५

तदेव चान्यत्र विपर्य्ययेण
कार्य्य ऐत्वे सयमीकारमाहु: ।
धातोर्विभेतेर्जयतेर्नियश्चाऽ—
भेष्म चाजैष्म नैष्टेति चैषु ॥ १६ ॥

तदेव सर्वत्रान्यत्र अन्येषु स्थानेषु ऐत्वे कर्त्तव्ये विपर्य्ययेण अकारं कृत्वा सयम् ईकारम् अक्षरम् असन्तमाहु: । ते तथैव दोषा भवन्ति । तथा च भी—जि—नी इत्येतेषां धातूनां प्रयोगे 'अभैष्म' इत्यत्र 'अभयीष्म' ( ऋ॰ ८।४७।१८ ), 'अजैष्म' इत्यत्र 'अजयीष्म' ( ऋ॰ ८।४७।१८ ), 'नैष्ट' इत्यत्र 'नयीष्ट' ( ऋ॰ ८।३०।३ ) ।

इकारस्य स्थान ऋकारमाहु-
र्लृकारं वा चन्द्रनिर्णिक् सुशिल्पे ।
अनन्तरे तद् विपरीतमाहु
स्तालव्ये शृङ्गे बिभ्रृयाद्विचृत्ता: ॥ १७ ॥

इकारस्य स्थाने क्वचिद् ऋकारमाहु:, क्वचिद् वा लृकारमाहु: । ते च दोषा यथा—'चन्द्रनिर्णिक्' इत्यत्र चन्द्रनृर्णिक् ( ऋ॰ १०।१०६।८), 'सुशिल्पे' इत्यत्र 'सुश्ल्ल्पे' ( ऋ॰ ९।५।६ ) ।

ऋकारात् अनन्तरे पूर्व्वत: परतो वा तालव्ये सति यदि तालव्यो वर्णो भवति तदा तद् विधानं विपरीतमाहु: । यदुक्तम् इकारस्य स्थाने ऋकारमाहु: तदिह ऋकारस्थाने इकारमाहुरित्यर्थ: । स दोषो ज्ञेय: । यथा—'शृङ्गे' इत्यत्र 'शिङ्गे' ( ऋ॰ ५।२।९ ), 'बिभ्रृयात्' इत्यत्र 'बिभियात्' ( ऋ॰ १०।१०।९ ), 'विचृत्ता:' इत्यत्र 'विचित्ता:' ( ऋ॰ २।२७।१६ ) ।

तालुस्थानो व्यञ्जनादुत्तरश्चेद्
अयकारस्तत्र यकारमाहुः ।
शुनश्शेपः शास्सि ववर्जुषीणाम्
अतक्षि विरप्शीति निदर्शनानि ॥ १८ ॥

अयकारो यकारादन्यस्तालुस्थानो वर्णो व्यञ्जनादुत्तरो भवति चेत् तदा तत्र अविद्यमानं यकारमाहुः। स च दोषो ज्ञेयः। यथा— 'शुनश्शेपः' इत्यत्र 'शुनश्शेयपः (ऋ १।२४।१२), 'शास्सि' इत्यत्र 'शास्सिय' (ऋ १।३१।१४), 'ववर्जुषीणाम्' इत्यत्र 'ववर्जुयीणाम् (ऋ १।१३४।६), 'अतक्षि' इत्यत्र 'अतक्ष्यि' (ऋ ८।१०७।१३), 'विरप्शी' इत्यत्र 'विरप्श्यी (ऋ १।८।८)।

लुम्पन्ति वा सन्तमेवं यकारं
ज्यैष्ठ्याय सम्वारन्नापृच्छ्यमृभ्वा।
व्यस्यन्त्यन्तर्महतोऽव्यायतं तं
दीर्घायुः सूर्यो कृशदीर्त ऊर्जम् ॥ १९ ॥

अथ क्वचिदेवं सन्तं व्यञ्जनादुत्तरं सन्तम् इति यावत् यकारं वकारं च लुम्पन्ति। स च दोषः। यथा—'ज्यैष्ठ्याय' इत्यत्र 'जैष्ठाय' (ऋ १।५।६), 'सम्वारन्' इत्यत्र 'समारन्' (ऋ १०।१३२।३), 'आपृच्छ्यम्' इत्यत्र 'आपृच्छम्' (ऋ ८।१०७।५), 'ऋभ्वा' इत्यत्र 'ऋभा' (ऋ ६।२४।२)।

महतः संयोगस्यान्तर्भूतं महतो दीर्घात् परं अव्यायतमपृथग्भूतम् रेफेण सक्तमित्यर्थः, तमन्तर्व्यस्यन्ति रेफात् पृथक् कुर्वन्ति केमचित् स्वरेण व्यवदधतोत्यर्थः। यथा—'दीर्घायु'रित्यत्र 'दोरिघायुः'

( ऋ॰ १०।८५।३८ ), 'सूर्यः' इत्यत्र 'सूरियः' ( ऋ॰ १०।१५८।१ ), 'रुशदीर्ते' ( ऋ॰ ८।८१।३ ) इत्यत्र 'रुशदीरिर्ते', 'ऊर्जम्' इत्यत्र 'ऊरजम्' ( ऋ॰ ८।६३।२ )।

लुम्पन्त्यन्तःस्थां क्रमयन्ति वैतां
स्वरात् सस्थानादवरां परां वा ।
स्वस्तयेऽधायि भुवनेयमूवू
रक्तं ह्रस्वं द्राघयन्त्युग्रँ ओकः ॥ २० ॥

सस्थानात् स्वरात् अवरां पूर्वां परां वा अन्तःस्थां लुम्पन्ति अथवा क्रमयन्ति द्वित्वमापादयन्तीत्यर्थः। तौ दोषौ परिहरेत्। यथा— 'स्वस्तये' इत्यत्र 'स्वस्तए', 'स्वस्तय्ये' वा ; 'भुवना' इत्यत्र 'भुव्वना', 'भुअना' वा ; 'इयम्' इत्यत्र 'इय्यम्', 'इअम्' वा ; 'ऊवुः' इत्यत्र 'ऊव्वुः' 'ऊउः' वा।

रक्तं ह्रस्वं दीर्घं कुर्वन्ति। स दोषः। यथा—उग्रँ। ओकः ( ऋ॰ ७।२५।४ )।

हकारसोष्मोपहिताद् यकाराद्
वकाराद् वा सर्वसोष्मोष्मपूर्वात् ।
तत्सस्थानं पूर्वमूष्माणमाहु-
स्तुच्छ्यान् दध्या आपृच्छ्यम्भ्या ह्वयेऽह्यः ॥२

हकारेण सोष्मभिश्चोपहितात् यकाराद्, सर्वैरूष्मभिः सोष्मभिश्चोपहितात् वकाराद् वा पूर्वं तेषां समानस्थानमूष्माणमाहुः। स दोषः। यथा—'तुच्छ्यान्' इत्यत्र 'तुश्छ्यान्' ; 'दध्याः' इत्यत्र 'दःध्याः'

'आपृच्छाम्' इत्यत्र 'आपृश्चछाम्'; 'ऋभ्वा' इत्यत्र ऋ( ᳵप )भ्वा; 'ह्वये' इत्यत्र ':ह्वये', 'अह्नः' इत्यत्र 'अःह्नः'।

पकारवर्गोपहिताच्च रक्तात्

अन्यं यमं तृप ्णुताप्नानमौभ्नात्।

अनुस्वारमुपधां वान्यवर्णां

स्वरोपधात् सोष्मयमोदयश्चेत् ॥ २२ ॥

तङ् घ्नन्त्यञ् ज्मो अङ् घ्नत ईङ्खयन्तीः

संज्ञातरूपोऽथ संज्ञानमिन्द्रः।

सान्तःस्थादौ धारयन्तः परक्रमं

शर्म्मन् स्यामास्मिन् सु जनाञ् छ्रधीयतः॥२३॥

पकारवर्गेणोपहितात् रक्तादनुनासिकात् पूर्वमन्यं यमाधिकम् आहुः। यथा—'तृप्प्णुत', 'आप्प्नानम्', 'औम्भ्नात्' इत्यत्र यथाक्रमं 'तृप्पँ पँ णुत', 'आपँ प्नानम्' 'औम्भँ भ्नात्' इति।

तत्सस्थानं पूर्वम् (१४।२१) इत्यतः पूर्वमित्यनुवर्त्तते। पकारवर्गोपहिताच्च रक्तात् इत्यतः रक्तपदमनुवर्त्तते। स्वरोपधात् रक्तात् पूर्वमनुस्वारमाहुः, अन्यवर्णामुपधां वा आहुः स रक्तः सोष्मोदयो यमोदयो वा भवति चेत्। तौ दोषौ परिहरेत्। यथा—'तङ् घ्नन्ति,' 'अञ् ज्मः', 'ईङ् खयन्तीः' 'सङ् ज्ञातरूपः' 'सङ् ज्ञानम् इन्द्रः' इत्यादीनां स्थाने यथाक्रमं 'तंङ् घ्नन्ति,' 'अंञ् ज्मः,' 'ईंङ् खयन्तीः,' 'संङ् ज्ञातरूपः,' 'संङ् ज्ञानम् इन्द्रः' इत्येवं रूपाणि।

सान्तःस्थस्य संयोगस्य आदौ रक्तं धारयन्तो विलम्बमानाः परक्रमं कुर्वन्ति। स च दोषः। यथा—'शर्म्मन् स्याम' इत्यत्र 'शर्म्मन्

स्याम्'; 'अस्मिन् स्वेतत्' इत्यत्र 'अस्मिन् म्स्वेतत्'; 'जनान् क्षुधी-
यतः' इत्यतः 'जनान् च्क्षुधीयतः'।

रक्तै रागः समवाये स्वराणां
न नू न' नृम् ण नृमणा नृभिर्नृन्।
रक्तात्तु सोष्मा क्रियते हकारो
दध्यङ् ह देवान् हवते महान्हि ॥ २४ ॥

रैः सह स्वराणां समवाये रागः क्रियते। यथा—'न नू नम्'
इत्यत्र 'नँ नूँ नँम्'; 'नृम्णम्' इत्यत्र 'नृँम्णँम्'; 'नृम्णा' इत्यत्र
'नृँ म्णाः'; 'नृभिर्नृन्' इत्यत्र 'नृभिँर्नृँन्'।

रक्तात् परो हकारः सोष्मा क्रियते। यथा—'दध्यङ् ह' इत्यत्र
'दध्यङ् घ', 'देवान् हवते' इत्यत्र 'देवान् घवते'; 'महान् हि' इत्यत्र
'महान् घि।'

संयोगानां स्वरभक्त्या व्यवायो-
ऽविक्रमण' क्रमण' वाऽयथोक्तम्।
विपर्य्ययो वा व्यत तिल्विलेऽज्मन्-
द्रप्सोऽजुष्रन् साञ्ज योऽष्ट्रांप्रनेष्ट्रात् ॥२५॥

संयोगानां क्वचिदविद्यमानया स्वरभक्त्या व्यवायः क्रियते संयोगस्य
मध्ये क्वचित् स्वरमुत्पादयतीत्यर्थः। क्वचित् अविक्रमण' द्विर्वचना-
भावः क्रियते। क्वचिच्च अयथोक्तं क्रमण' क्रियते। क्वचिद् वा
विपर्य्ययः विद्यमानां स्वरभक्ति' न कुर्वन्तीत्यर्थः। इमे चत्वारो दोषाः
संयोगस्य भवन्ति। तान् वर्जयेत्। तथाच—'व्यत' इत्यत्राविक्र-
मणम्। यथा—६।१ इति 'परि व्यत' (ऋ' २।१७।२) इति

कर्त्तव्ये 'परिव्यत।' तिल्विले, अज्मन् इत्येतयो र्द्वित्वाभिधानम् अकृत्वा अतोर्थोर्षिता उच्चारयन्ति। तत्र स्वरभक्त्या व्यवाय इव भवति। तथाच—'तिल्विले' इति कर्त्तव्ये 'तिलिविले' : 'अज्ज्मन्' इति कर्त्तव्ये 'अजिमन्'। दृष्टोऽविक्रमणमेव। 'अजुष्टन्' इत्यत्र षकारात् परं टकारमिव किञ्चित् उत्पाद्यते। अयथोक्तं क्रमणं कुर्व्वन्ति। 'सार्य्य' इत्यत्र ६।१३ इत्यनेन स्वरभक्तौ कर्त्तव्यायां विपर्य्ययः। अष्ट्राम्, प्र, नेष्ट्रात् इत्येतेषु च ६।२ नियमविरोधेन क्रमणमेव।

विवृत्तिषु प्रत्ययादेरदर्शनं

यथा या ऐक्ष्व य औशिजश्च।

इ उ सन्धौ सन्ध्यवचनं च कासु

चित्स इदस्ता कस्त उषो यथैते ॥२६॥

विवृत्तिषु प्रत्ययादेः परभूतस्य आदेरदर्शनं लोपः क्रियते। स दोषः। यथा—'या ऐक्ष्वः' इत्यत्र 'या इक्ष्वः'; 'य औशिजः' इत्यत्र 'य उशिजः'।

इ उ इत्येतयोः सन्धौ कासुचित् विवृत्तिषु सन्ध्यक्षरवचनं एकारौकारवचनमित्यर्थः प्रत्ययादर्शनं च क्रियते। तौ दोषौ वर्ज्जयेत्। यथा—'सः इद् अस्ता' इत्यतः 'सेदस्ता'; 'ते उषः' इत्यतः 'तोषः'।

समानवर्णासु विपर्य्ययो वा

यथा ह्युती इन्द्र क आसतश्च।

अभिव्यादानं च विवृत्तिपूर्व्वे

कण्ठ्ये ता आपोऽवसा एति दीर्घे ॥२७॥

समानवर्णासु विवृत्तिषु कासुचित् विपर्ययः क्रियते, प्रत्ययादेरदर्शनं वा क्रियते। पूर्वो वर्णः परः क्रियते परश्च पूर्वः स विपर्ययः। यथा—'ऊती इन्द्रः' इत्यत्र 'उति ईन्द्रः'; 'क आसतः' इत्यत्र 'का असतः।'

विवृत्तिः पूर्व्वा अस्मात् अक्षरात् विवृत्तिपूर्व्वम् अक्षरम्; विवृत्तेः पूर्व्वमपि विवृत्तिपूर्व्वम्। ते उभे कण्ठ्ये दीर्घे यदा भवतस्तदा कासुचित् विवृत्तिषु अभिव्यादानं स्यात्। आदानम् आरम्भः। विविधं विपुलं विशालं वा आदानम् अथवा आदानमेव व्यादानम्। अथवा येनचित् अभिव्याप्तम् अभिभूतं व्यादानं यस्य तदिदम् अभिव्यादानं भवत्यक्षरम्। किम् उक्तं भवति पादमात्रा विवृत्तिरिह समधिका क्रियते; तया परस्यारम्भो व्याप्यते इत्यर्थः। (२।१) यथा—'ताआपः' इत्यत: 'ता पः'; 'अवसा आ' इत्यत: 'अवसा'।

**न दोषाणां स्वरसंयोगजानाम्**

**अन्तो गम्यः संख्ययाथेतरेषाम्।**

**शक्यस्तु शास्त्रादधिसाधु धर्म्मो**

**युक्तेन कृत्स्नः प्रतिपत्तुमस्मात्॥ २८॥**

एषां दोषाणां स्वरसंयोगजानां स्वरेषु उच्यमानेषु उत्पद्यन्ते तेषाम् इत्यर्थः। अथेतरेषां संख्यया गणनया अन्तः परं गन्तुमशक्यम्। कस्मात्—उच्चावचाः प्रयोक्तारः नानास्थानकरणानुप्रदानस्वरोच्चारणाः तथा नानाप्रतिस्वरभावशीलसमाचाराः केषु वर्णेषु कान् जनयन्तीत्यज्ञानात्।

अस्मात् शास्त्रादधि कृत्स्नो धर्मः वर्णधर्मः साधुयुक्तेन प्रतिपत्तुं शक्यः। साधुयुक्तो नाम मनोवागबुद्धियुक्तः, तत्त्वार्थशिक्षालक्षणवित्, ऊहापोहवितर्कज्ञः, शास्त्रागमकुशलः, ध्यानपरोऽवितथाध्यवसायी।

अकारस्य करणावस्थयान्यान्
स्वरान् ब्रूयात्तद्धि सम्पन्नमाहुः ।
परानकारोदयवद्विवक्षेत्
सर्व्वान् वर्णानिति सम्प्रदेशः ॥ २९ ॥

अकारस्य करणावस्थया अ ऋ इ ई उ ऊ इतीत्थमाद्यान् अपि स्वरान् ब्रूयात् । तद्धि सम्पन्नम् योग्यम् आहुः ।

परान् ककारादीन्यपि व्यञ्जनानि व्यञ्जनसंज्ञकान् वर्णान् अकारोदयवत् अकारोदयानिव विवक्षेत् वक्तुमिच्छेत् । सम्प्रदेशः वर्णानाम् ।

शास्त्रापवादात् प्रतिपत्तिभेदान्
निन्दन्त्यकृत्स्नेति च वर्णशिक्षाम् ।
नैतेन शास्त्रेण विशिष्यतेऽन्यैः
कृत्स्नञ्च वेदाङ्गमनिन्द्यमार्षम् ॥ ३० ॥

शास्त्राणामपवादा दोषाः सन्ति—पुनरुक्तता, अविस्पष्टार्थता, कष्टशब्दता, अशक्यार्थता एवमादयः । अशक्यादिषु दोषेषु अस्मिन् शास्त्रे संहितमप्येकमक्षरं यथोच्चारयितुं न शक्यम् । प्रतिपत्तिभेदो नाम 'आहुर्घोषं घोषवतामकारम्' ( १३।५ ) इत्युक्त्वा 'अतोत्पन्नावपर ऊष्मघोषौ' (१३।५) इत्येवमादीनां वर्णप्रतिपत्तिभेदो विरुद्धविधानानि । एवञ्च शास्त्रापवादात् प्रतिपत्तिभेदाच्च वर्णशिक्षाम् अकृत्स्नेति अप्रयोजनेति निन्दन्ति ।

यदुच्यते इह यथोक्तं तथा वर्णोच्चारणं कर्त्तुमशक्यं तस्मादकृत्स्नेयं वर्णशिक्षेति तत् न । शिक्षा एतेनैव विधानेन अन्यैः शास्त्रैर्न विशिष्यते अन्येष्वपि शास्त्रेषु हि ग्रस्तनिरस्त इत्यादयो वर्णानां दोषा विधीयन्ते ।

तानि च अशक्यार्थविधानात् अकृत्स्नानीति नोच्यन्ते। तानि च कृत्स्नान्येव भवन्ति। तस्मादिदमपि शास्त्रं कृत्स्नं सम्भवितुमर्हति। प्रतिपत्तिभेदश्च न—अन्येष्वपि शास्त्रेषु एवंविधा विकल्पाः सन्ति। षट्सु वेदाङ्गेषु इदमप्येकमङ्गं। अनिन्द्यम् आर्षञ्च वेदाङ्गशास्त्रं भवति।

## पञ्चदशं पटलम्

पारायणं वर्त्तयेद् ब्रह्मचारी
गुरुः शिष्येभ्यस्तदनुव्रतेभ्यः।
अध्यासीनो दिशमेकां प्रशस्तां
प्राचीमुदीचीमपराजितां वा॥ १॥

गुरुरुपाध्यायः ब्रह्मचारी भूत्वा तदनुव्रतेभ्यः गुरौ अध्ययने च ये भक्ता स्तेभ्यः शिष्येभ्यः पारायणमध्यापनं वर्त्तयेत् कुर्य्यात्। किम्भूतः सन्—प्राचीं पूर्वाम् उदीचीमुत्तरां, अपराजितां प्रागुदीचीं वा यां कामप्येकां प्रशस्तां दिशमध्यासीनः।

एकः श्रोता दक्षिणतो निषीदेद्
द्वौ वा भूयांसस्तु यथावकाशम्।
तेऽधीहि भो३ इत्यभिचोदयन्ति
गुरुं शिष्या उपसंगृह्य सर्व्वे॥ २॥

एकः श्रोता शिष्यः गुरोर्दक्षिणतो निषीदेत् उपविशेदित्यर्थः। यदि द्वौ श्रोतारौ स्यातां ततोऽपि दक्षिणत एव निषीदेताम्। यदि भूयांसो बहवः श्रोतारः स्युस्तदा यत्र यत्रावकाशस्तत्र तत्र निषीदेयुः।

ते सर्व्वे शिष्या उपसंगृह्य गुरोः पादौ पाणिभ्यामुपपीड्य शिरसि कृत्वा 'अधीहि भोः' इत्यनेन गुरुमभिचोदयन्ति।

स ओ३मिति प्रस्वरति त्रिमात्रः
प्रस्वारः स्थाने स भवत्युदात्तः।
चतुर्मात्रो वार्द्धपूर्व्वोऽनुदात्तः
षण्मात्रो वा भवति द्विःस्वरः सन्॥ ३॥

स गुरुरोम् इति प्रस्वरति शब्दं करोति, त्रिमात्रः प्रस्वारः ओँकार-शब्दः स्थाने* भवति। उदात्तश्च भवति। अथवा स चतुर्मात्रो भवति, अर्द्धपूर्वोऽनुदात्तो यस्य सोऽर्द्धपूर्वोऽनुदात्तः। अथवा षण्मात्रो भवति द्विःस्वरः सन्। इमे त्रिविधाः प्रणवाः।

अध्येतुरध्यापयितुश्च नित्यं
स्वर्गद्वारं ब्रह्म वरिष्ठमेतत्।
मुखं स्वाध्यायस्य भवेन्न चैतत्
सन्दध्यात् स्वाध्यायगतं परेण॥ ४॥

प्रणवः अध्येतुः शिष्यस्य अध्यापयितुश्च नितरां सुखम् भवति। स्वर्गद्वारं वरिष्ठं प्रधानं ब्रह्म इत्येतदक्षरं प्रतीयात् जानीयात्। मुखमादौ स्वाध्यायस्य भवेत् तद् ब्रह्म।

---

* किमिदं स्थानमिति? उपांशुस्थानमिति। उपांशुस्थानं निषादपञ्चममध्यमतारेषु येन स्थानेन प्रयोज्यं स्यात् तेनैव प्रकारेण प्रणवं कुर्य्यात्।

एतदोङ्कारं स्वाध्यायार्थं प्रयुक्तं परपादेन वा अर्द्धर्चेन वा न सन्दध्यात्। यज्ञकर्म्मणि तु सन्धानं भवति, चोदितत्वात्।

प्रचोदितोऽभिक्रमते यथास्य
क्रमः परस्ताद् विहितस्तथैव।
सर्व्वोदात्तं त्विह तस्मिन्नपृक्तम्
अन्तःप्रयुक्तं द्विरुपस्थितं वा ॥ ५ ॥

शिष्यस्य प्रचोदितो गुरुः ओङ्कारं कृत्वा अभिक्रमते अध्ययनमुच्चारयति। यथा अस्य अध्ययनस्य क्रमः आनुपूर्व्यम् परस्तात् उत्तरत्र विहितः 'दक्षिणाय प्रथमं प्रश्नमाह' (१५।१२) इति तत् तथैव।

इह पारायण-प्रवचने तस्मिन्नभिक्रमे सर्वोदात्तं च यत् पदं अन्तःप्रयुक्तं चेप्रसन्धिरहितं वा अपृक्तं वा उपस्थितं सेतिकरणं वा तत् पदं शिष्यज्ञापनार्थं गुरुर्द्विरुच्चारयति।

अभिक्रान्ते द्वे पदे वाधिके वा
पूर्व्वं पदं प्रथमः प्राह शिष्यः।
निर्वाच्ये तु भो ३ इति चोदना स्यान्
निरुक्त ओं भो ३ इति चाभ्यनुज्ञा ॥ ६ ॥

गुरुणा द्वे पदे वा अधिके वा प्रोक्ते पूर्वं पदं प्राह दक्षिणः शिष्यः। ततः पश्चादितरे प्राहुरित्यर्थः।

शिष्येण निर्वक्तव्ये गुरौ 'भोः' इति त्रिमात्रं चोदना स्यात्। तेन निरुक्ते अर्थं पुनर्गृहीतमावर्तयितुम् 'ओँ भो३' इति अभ्यनुज्ञा स्यात्।

परिपन्नं प्राकृतमूष्मसन्धिं
नकारस्य लोपरेफोष्मभावम् ।
असंयुक्तम् ऋपरं रेफसन्धिं
विवृत्तिमित्यत्र निदर्शनानि ॥ ७ ॥

परिपन्नसन्धिः, प्राकृतोष्मसन्धिः, नकारस्य लोपः, रेफभावः, ऊष्मभावश्च, असंयुक्त ऋपरः सन्धिः, रेफसन्धिः, विवृत्तिश्च—इत्येतान् अत्र निदर्शनान्याहुराचार्य्याः। कस्य निदर्शनानीत्येतदागमयितव्यम् ।

प्रत्युच्चार्य्यैतद् वचनं परस्य
शिष्यस्य स्यात् भो ३ इति चोदना वा ।
अर्द्धर्चीदर्केषु तु वर्जयेयु-
रध्यायान्तेषूभयथा स्मरन्ति ॥ ८ ॥

परस्य गुरोरेतद् वचनं प्रत्युच्चार्य्य शिष्यस्य 'भोः३' इति चोदना स्यात्, न वा स्यात्। अर्द्धर्चोदर्केषु अर्द्धर्चसमयेषु तां चोदनां वर्जयेयुः। अध्यायान्तेषु अर्द्धर्चोदर्केषु तस्या चोदनाया वर्जनं वा न वा इत्युभयथा स्मरन्ति आचार्य्या इति शेषः।

गुरुः शिष्यस्य पदमाह मुख्यं
समासश्चेदसमासो यदि वे ।
एतेन कल्पेन समाप्य प्रश्नं
प्रत्याम्नायस्तं पुनरेव सर्व्वे ॥ ९ ॥

प्रश्ने तृचे इत्यर्थः गुरुः शिष्यस्य मुख्यम् एकपदमाह यदि समासः, यदि असमासस्तदा द्वे पदे आह ।

एतेन कल्पेन विधानेन प्रश्नं तृचं समाप्य सर्वे शिष्यास्तमेव प्रश्नं पुनः पुनरभ्यासयेयुः ।

तत ऊर्ध्वं सन्ततं संवृतेन
प्रविग्रहेण मृद्ववग्रहेण ।
सर्वोदात्तेन च चर्चयेयुः
सर्वं इमानुपस्थापयन्तः पदानि ॥ १० ॥

ततस्तस्मादभ्यासात् ऊर्द्ध्वं सन्ततं संवृतेन समानशब्देन प्रविग्रहेण प्रविग्रहेषु प्रश्लिष्टं विश्लिष्टं कुर्य्यात्; कालाधिक्येन कुर्य्यादित्यर्थः । तथाच 'उद् उ एति' इति पठेत् न तु 'उद्वेति'। मृद्ववग्रहेण—मृदवः अवग्रहा यस्मिन् स तेन मृद्ववग्रहेण सर्वोदात्तेन स्वरेण चर्चयेयुः ।

इमानि पदानि अधोनिर्दिष्टानीति यावत् उपस्थापयन्तः सेतिकरणानि कुर्वन्तः चर्चयेयुरित्यर्थः ।

अभ्युत्परा निर्व्युप सं प्रति प्र
न्यध्यत्यपा दुःस्वपि पर्य्यवानु ।
आद्यं स्थितोपस्थितमेकमेषाम्
अर्द्धर्चान्ते कुर्य्युरथो द्विपन्थौ ॥ ११ ॥

अभि, उत्, परा, निर्, वि, उप, सम्, प्रति, प्र, नि, अधि, अति, अप, आ, दुः, सु, अपि, परि, अव, अनु इत्येतानि पदानि सेतिकरणानि भवन्तीत्यर्थः ।

एषां शब्दानां मध्ये आद्यम् एकम् 'अभि' इत्येतत् इति यावत् अर्द्धर्चान्ते वर्त्तमानं द्विषन्धौ (२।४४) विवृत्तिस्थाने वा स्थितोपस्थितं कुर्य्युः। यथा—अभीत्यभि।

च घ हि वेति च सर्वत्र तेषाम्

अनेकं चेत् सन्निपतेद्द्वितीयम्।

समस्यन्तश्च द्विपदाद्यर्द्धर्चौ

व्यवस्यन्त इतराश्चर्चयेयुः॥ १२॥

च, घ, हि, वा, इत्येतानि सर्वत्र स्थितोपस्थितानि कुर्य्युः। तेषामभ्यादिशब्दानामनेकं चेत् सन्निपतेत् तदा द्वितीयम् सेतिकरणं कुर्य्युरित्यर्थः। यथा उत्परेति न तु परेति परा।

पश्वा न तायुम् (ऋः १।६५।४) इत्येवमादीनां द्विपदानाम् उक्तानां द्वौ द्वौ अर्द्धर्चौ समस्यन्त एकामृचं कुर्वन्तः चर्चयेयुः व्यवस्यन्तः पृथक् कुर्वन्तः। इतरा अधिका याः सूक्तेषु 'साधुनर्गृध्नुः।' (ऋः १।७०।६) इति यथा तास्तथैव चर्चयेयुः। आदिग्रहणात् आदिपदस्यैतत् उच्यते।

दक्षिणाय प्रथमं प्रश्नमाह

प्रदक्षिणं तत ऊर्द्ध्वं परीयुः।

एवं सर्व्वे प्रश्नशोऽध्यायमुक्त्वो-

पसंगृह्यातिसृष्टा यथार्थम्॥ १३॥

गुरुः प्रथमं प्रश्नं तृचं दक्षिणाय शिष्याय आह। तत अध्ययनारम्भादूर्द्ध्वं क्वचिद् गच्छन्तः शिष्याः प्रदक्षिणमाचार्य्यं कृत्वा परीयुः। एवम् एतेन विधिना प्रश्नशः सर्वे शिष्या अध्ययनान्तं गत्वा गुरुमुप-

संगृह्य तेन अतिसृष्टा विसर्जिताः यथार्थं यथार्थाः सुरः यत् यत् स्वकर्म्म तत् तत् कुर्य्यु रित्यर्थः।

प्रश्नस्तृचः पङ्क्तिषु तु द्व्यृचौ वा
द्वे द्वे च पङ्क्तेरधिकाक्षरेषु।
एका च सूक्तं समयास्तु गण्याः
परावरार्धा द्विपदे यथैका॥ १४॥

तृचः प्रश्न इत्युच्यते। पंक्तिषु ऋक्षु द्व्यृचो वा प्रश्नो भवति तृचो वा।
पंक्तेरधिकाक्षरासु त्रिष्टुभादिषु द्वे द्वे एव ऋचः प्रश्नो भवति:।
एका ऋक् यत् सूक्तं भवति सा च प्रश्नो भवति।
परावरार्ध्याः स्वल्पा उत्कृष्टाश्च समयाः प्रश्नेषु गण्यन्ते।
द्वे द्विपदे यथा एका ऋक् तथा गण्येते।

सूक्तस्य शेषोऽल्पतरो यदि स्यात्
पूर्व्वं स गच्छेद् यदि तु द्व्यृचो वा।
ते षष्टिरध्याय उपाधिका वा
सूक्तेऽसमाप्ते यदि ते समाप्ताः॥ १५॥

एवं प्रश्नेषु परिकल्प्यमानेषु सूक्तस्य शेषो यदि अल्पतरः स्यात् तदा स पूर्वं प्रश्नं गच्छेत् पूर्वस्मिन् एव प्रश्ने अन्तर्भवतीत्यर्थः। यदि सूक्तस्य शेषो द्व्यृचो भवति तदा स पूर्वं प्रश्नं गच्छेत् न वा गच्छेत्।

ते प्रश्ना एवं गण्यमाना एकस्मिन्नध्याये षष्टिर्भवन्ति उपाधिका वा भवन्ति ; सूक्तेषु अध्यायगतेषु असमाप्तेषु यदि षष्टिः पूर्णा भवन्ति इत्यर्थः तदा यावद्भिः प्रश्नैः अवशिष्टसूक्तानि समाप्तिं गच्छन्ति तावद्भिरधिका षष्टिर्भवति।

भो३ इत्यर्धर्चे गुरुणोक्त आह
शिष्य ओं भो३ इत्युचितामृचं च ।
अथैके प्राहुरनुसंहितं तत्
पारायणे प्रवचनं प्रशस्तम् ॥ १६ ॥

अध्यायस्यान्ते अर्द्धर्चे समाप्ते 'भोः ३' इति गुरुणा उक्तः शिष्य 'ओँ भोः ३' इत्याह बाढ़ं युष्मदनुध्यानात् समाप्तमित्यर्थः। उचिताम् ऋचञ्च—'शतधारम्' (ऋं ३।२६।९) इति, तथा 'नमो ब्रह्मणे नमोस्त्वग्नये' (आ, गृ, ३।३।४)।

अथैके आचार्य्या एतदेव पारायणस्य प्रवचनम् अनुसंहितम् संहिताक्रमेण प्रशस्तम् आहुः।

## षोड़शं पटलम्

गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः।
पंक्तिस्त्रिष्टुब् जगती च सप्तच्छन्दांसि तानि ह ॥१॥

गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती—इति सप्तच्छन्दांसि। तानि प्रजापतेश्छन्दांसीति वेदितव्यानि।

अष्टाक्षरप्रभृतीनि चतुर्भूयः परं परम्।
दैवान्यपि च सप्तैव सप्त चैवासुराण्यपि ॥ २ ॥

तानि च अष्टाक्षरप्रभृतीनि अष्टाक्षरादीनि आद्याया गायत्र्या अष्टाक्षराणि भवन्तीत्यर्थः।

तेषु च प्रजापतिच्छन्दःसु पूर्वस्मात् पूर्वस्मात् छन्दस उत्तरमुत्तरं चतुर्भिरक्षरैर्भूयोऽधिकं भवति। तथा च, गायत्र्या अष्टाक्षराणि, उष्णिहः द्वादशाक्षराणि, अनुष्टुभः षोडशाक्षराणि इति प्रकारेणाक्षर-संख्या वेदितव्या।

दैवान्यपि गायत्र्यादीनि सप्तच्छन्दांसि भवन्ति। आसुराण्यपि च गायत्र्यादीनि सप्तच्छन्दांसि भवन्ति।

**एकोत्तराणि देवानां तान्येवैकाक्षरादधि।**

**एकावमान्यसुराणां ततः पञ्चदशाक्षरात् ॥ ३ ॥**

तान्येव गायत्र्यादीनि छन्दांसि देवानां सम्बन्धे एकाक्षरप्रभृतीनि एकोत्तराणि च भवन्ति। तथा च दैवी गायत्री एकाक्षरा, दैवी उष्णिक् द्व्यक्षरा, दैवी अनुष्टुप् त्र्यक्षरा इत्यादि।

तान्येव च गायत्र्यादीनि छन्दांसि असुराणां सम्बन्धे पञ्चदशाक्षरादीनि एकावमानि एकाक्षरन्यूनानि भवन्ति। तथाच—आसुरी गायत्री पञ्चदशाक्षरा, आसुरी उष्णिक् चतुर्दशाक्षरा इत्यादि।

**तानि त्रीणि समागम्य सनामानि सनाम तत्।**

**एकं भवत्यृषिच्छन्दस्तथा गच्छन्ति सम्पदम् ॥४॥**

समाननामानि एकनामानि तानि त्रीणि प्रजापतिदेवासुराणां छन्दांसि समागम्य सहभूत्वा सहभूतानां तेषां सनाम तुल्यनाम तदेकं ऋषिच्छन्दःसंज्ञकं भवति। तथाच प्रजापतिगायत्री दैवी गायत्री आसुरी गायत्री—इत्येतासां अक्षरसंख्यायोगेन ऋषिच्छन्दोगायत्री

भवति। एवं च ऋषिच्छन्दोगायत्र्या अक्षरसंख्या (८+१+१५) चतुर्विंशतिः। एवं सर्वाणि ऋषिच्छन्दांसि सम्पदं गच्छन्ति।

**एवं त्रिप्रकृतीन्याहुर्युक्तानि चतुरुत्तरम्।**
**ऋषिच्छन्दांसि तैः प्रायो मन्त्रः श्लोकश्च वर्त्तते ॥५॥**

एवं च युक्तानि ऋषिच्छन्दांसि त्रिप्रकृतीनि त्रीणि छन्दांसि प्रकृतिभूतानि मूलभूतानि येषां तथाभूतानि भवन्ति। एतानि च चतुरुत्तराणि भवन्ति। तथा च ऋषिच्छन्दसि गायत्र्या उष्णिहो अक्षरसंख्या चतुरधिका।

तैश्च ऋषिच्छन्दोभिः प्रायेण मन्त्रश्लोकादिकं निर्म्मितं भवति।

**तत्पादो यजुषां छन्दः साम्नां तु द्वावृचां त्रयः।**
**गायत्र्यादिजगत्यन्तमेकद्वित्र्यधिकं तु तत् ॥६॥**

तत्पादस्तेषाम् ऋषिच्छन्दसां पादः चतुर्थोऽंशो यजुषां छन्दो वेदितव्यम्। साम्नां छन्दो द्वौ पादौ वेदितव्यौ। ऋचां छन्दस्त्रयः पादा इति वेदितव्यम्। तथा च यजुषां गायत्री षडक्षरा, साम्नां द्वादशाक्षरा, ऋचां च अष्टादशाक्षरा।

तानि छन्दांसि यजुःसामर्चां गायत्र्यादिजगत्यन्तानि क्रमेण एकद्वित्र्यधिकानि भवन्ति। तथाच—यजुषां गायत्री षडक्षरा, उष्णिक् सप्ताक्षरा। तथा साम्नां गायत्री द्वादशाक्षरा उष्णिक् चतुर्द्दशाक्षरा। ऋचां गायत्री अष्टादशाक्षरा, उष्णिक् एकविंशत्यक्षरा। एवं सर्वत्र।

**आर्षवत्तत्समाहारो ब्राह्मो वर्गः षडुत्तरः।**
**अक्षराणि तु षट्त्रिंशद् गायत्री ब्रह्मणो मता ॥७॥**

तत्समाहार स्तेषामृग्यजु:साम्नां छन्दसां समाहार: आर्षवत् ऋषिच्छन्दोवत्। यथा प्रजापत्यादीनां समाहारेण ऋषिच्छन्दो भवति तथा ऋगादीनां समाहारेण ब्राह्ममित्यर्थ:। स ब्राह्म: ब्रह्मणोऽयं वर्गो गणः षडक्षरः। तथाच—ब्रह्मणो गायत्री षट्त्रिंशदक्षरा भवति।

**यजुषां षडृचां त्रिः षट् साम्नां द्वादश सम्पदि।**
**ऋषीणां तु त्रयो वर्गाः सप्तका एकधेतरे ॥ ८ ॥**

यजुषां गायत्री षडक्षरा। ऋचां त्रि:षट् अष्टादशाक्षरेत्यर्थः। साम्नां द्वादशाक्षरा। एवं च सम्पदि समाहारे षट्त्रिंशदक्षरा भवति।

ऋषीणाम् ऋषिच्छन्दसां सप्तकास्त्रयोवर्गा वेदितव्या:। गायत्र्यादि: प्रथमो वर्ग:, अतिजगत्यादिर्द्वितीय:, कृत्यादिस्तृतीय:। एकधेतरे, इतरे तु प्राजापत्यादयो वर्गास्ते एकधा भवन्ति, त्रिधा न भवन्तीत्यर्थ:।

## गायत्री

**ऋषिच्छन्दांसि गायत्री सा चतुर्विंशत्यक्षरा।**
**अष्टाक्षरास्त्रयः पादाश्चत्वारो वा षडक्षराः ॥९॥**

तेषु प्रजापतिदैवासुरर्षिच्छन्द:सु मध्ये ऋषिच्छन्दांस्येवात्र विस्तरेणोच्यन्ते।

तेषु गायत्री चतुर्विंशत्यक्षरा स्यात्। तस्या अष्टाक्षरा: त्रय: पादा भवन्ति। षडक्षरा वा चत्वार: पादा भवन्ति।

**इन्द्रः शचीपतिर्बलेन वीलितः**

**दुश्च्यवनो वृषा समत्सु सासहिः ॥१०॥**

इति चतुष्पादगायत्र्या उदाहरणम् ।

**पञ्चकाः पञ्च षट्कोऽन्त्यः पदपंक्तिर्हि सा भुरिक् ।**

**द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः ॥११॥**

पञ्चाक्षराः पञ्च पादाः भवन्ति यस्याः सा भुरिक् पदपंक्तिर्वेदितव्या । षड़क्षरो वा अन्त्यः पादो भवति चत्वारश्च पञ्चकाः सापि भुरिक् पदपंक्तिर्वेदितव्या । द्वौ वा पादौ—एकश्चतुष्क एकः षट्कः त्रयश्च पञ्चाक्षराः भवन्ति सापि भुरिक् पदपंक्तिः ।

**अधा हीन्द्रेति च तृचौ घृतमग्ने तमित्यृचः ।**

**अष्टको दशकः सप्तो विद्वांसाविति सा भुरिक् ॥१२॥**

"अधा हि" (ऋ॰ ४।१०।२-४), इन्द्र जुषस्व प्रवह (अथर्व २।५।१-३) इति तृचौ, घृतं न पूतं तनुः ( ऋ॰ ४।१०।६ ), अग्ने तमद्याश्वं न ( ऋ॰ ४।१०।१) इत्येतौ ऋचौ च तासामुदाहरणानि भवन्ति ।

यस्याः प्रथमः पादः अष्टाक्षरः, उत्तरः दशकः, अन्त्यः सप्तकः सा भुरिक् । उदाहरणम्—"विद्वांसा विदुरः पृच्छेत्" ( ऋ॰ १।१२०।२) ।

**युवाकु हीति गायत्री त्रयः सप्ताक्षरा विराट् ।**

**सैषा पादनिचृन्नाम गायत्री वैकविंशिका ॥१३॥**

युवाकु हि शचीनाम् (ऋ॰ १।१७।४)—इत्येषा त्रिःसप्ताक्षरा विराट् गायत्री । सैषा एकविंशत्यक्षरा पादनिचृन्नाम गायत्री एव वेदितव्या ।

**षट्कः सप्तकयोर्मध्ये स्तोतॄणां विवाचीति ।**

**यस्याः सातिनिचृन्नाम गायत्री द्विर्दशाक्षरा ॥१४॥**

सप्तकयोर्मध्ये षट्कः पादः यस्याः सा अतिनिचृन्नाम विंशत्यक्षरा गायत्री। यथा,—'पुरूतमं पुरूणां स्तोतॄणाम् विवाचि' (ऋ' ६।४५।२९)।

**षट्कसप्तकयोर्मध्ये तुभ्यासावातिथिं यथा ।**

**षडक्षरः प्रकृत्यैष व्यूहे नाष्टाक्षरोऽपि वा ॥१५॥**

प्रकृत्या षडक्षरः पादः अक्षरव्यूहेन तु अष्टाक्षरः एवंभूतः षट्कः षडक्षरः पादो यदि षट्कसप्तकयोः षडक्षरसप्ताक्षरयोः पादयोर्मध्ये भवेत् तदा सा गायत्री अतिनिचृन्नामैव। यथा—प्रेष्ठम् उ प्रियाणां तुभ्यासावातिथिम् ( ऋ' ८।१०३।१० )।

**उत्तरोत्तरिणः पादाः षट्सप्ताष्टाविति त्रयः ।**

**गायत्री वर्द्धमानैषा त्वमग्ने यज्ञानामिति ॥१६॥**

एकैकाक्षरेण वर्द्धमाना उत्तरोत्तरिणस्त्रयः पादाः षट्सप्ताष्टाक्षराः यस्याः सा गायत्री वर्द्धमाना नाम वेदितव्या। यथा—"त्वमग्ने यज्ञानाम्" ( ऋ' ६।१६।१ )।

**अष्टकौ मध्यमः षट्क एकेषामुपदिश्यते ।**

**स नो वाजेषु पादौ द्वौ जागतौ द्विपदोच्यते ॥१७॥**

एकेषां शाखिनां मतेन आद्यान्त्यौ अष्टकौ पादौ मध्यमः षट्कः पादः यस्याः सा वर्द्धमानैव उपदिश्यते।

'स नो वाजेष्ववितां पुरूवसुः ( ऋ ८।४६।१३ ) इति जागतो पादो द्विपदा गायत्र्युच्यते।

**आद्यान्त्यौ सप्तकौ यस्या मध्यमो दशको भवेत् ।**
**यवमध्या तु गायत्री समुन्व इति दृश्यते ॥१८॥**

यस्या आद्यान्तयौ पादो सप्तकौ, मध्ये च दशको भवेत् सा गायत्री यवमध्या नाम वेदितव्या। यथा—"समुन्वे यो वसूनाम्' ( ऋ ८।१०८।१३ )।

**षडक्षरः सप्ताक्षरस्तत एकादशाक्षरः ।**
**एषोष्णिग्गर्भा गायत्री ता मे अश्व्यानामिति॥१९॥**

यस्याः प्रथमः पादः षड़क्षरः ततो द्वितीयः सप्ताक्षरः तृतीय एकादशाक्षरः सैषा उष्णिग्गर्भा नाम गायत्री वेदितव्या। यथा,—"ता मे अश्व्यानां हरीणां नितोशना" ( ऋ ८।२५।२३)।

## उष्णिक्

**अष्टाविंशत्यक्षरोष्णिक् सा पादैर्वर्त्तते त्रिभिः ।**
**पूर्वावष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः ॥२०॥**

यस्या अष्टाविंशत्यक्षराणि सा उष्णिक् भवति, त्रिभिश्च पादैर्वर्त्तते —पूर्व्वौ द्वौ पादौ अष्टाक्षरौ तृतीयो द्वादशाक्षरः।

पुरउष्णिक् तु सा तस्मिन् प्रथमे मध्यमे ककुप् ।
अग्ने वाजस्य तच्चक्षुः सुदेवः स महेति च ॥ २१ ॥
ऋचो निदर्शनायैताः परा यास्ता यथोदिताः ।
सप्ताक्षरैश्चतुर्भिर्द्वे नदं मंसी महीति च ॥२२॥
पादैरनुष्टुभौ विद्यादक्षरैरुष्णिहाविमे ।
ददी रेक्ण इति त्वेषा ककुम्न्यङ्कुशिरा निचृत् ॥२३॥

तस्मिन् द्वादशाक्षरे पादे प्रथमे सति सा पुरउष्णिक् भवति—मध्यमे च सति ककुप् भवति ।

'अग्ने वाजस्य गोमतः' ( ऋ॰ १।७९।४ ), तच्चक्षुर्देवहितं ( ऋ॰ ७।६६।१६), सुदेवः स महामतिः (ऋ॰ ५।५३।१५) इत्येता ऋचः क्रमेण उष्णिक्, पुरउष्णिक्, ककुप् च इत्येतासां निदर्शनानि भवन्ति ।

सप्ताक्षरैः चतुर्भिः पादैः वक्ष्यमाणे द्वे ऋचो उष्णिहौ भवतः । ते च पादैरनुष्टुभौ जानीयात्, अक्षरैः कृत्वा उष्णिहौ भवतः । यथा—नदं वा ओदतीनाम् (ऋ॰ ८।६९।२), मंसीमहि त्वा वयम् (ऋ॰ १०।२६।४) ।

'ददी रेक्णः' ( ऋ॰ ८।४६।१५) इत्येषा ऋक् न्यङ्कुशिरा निचृत् ककुप् ।

एकादशोऽस्याः प्रथम उत्तमश्चतुरक्षरः ।
एकादशाक्षरौ च द्वौ मध्ये चैकः षडक्षरः ॥२४॥

अस्याः प्रथमः पाद एकादशाक्षरः । उत्तम स्तृतीय इति यावत् चतुरक्षरः ।

**उष्णिक् पिपीलिकमध्या हरी यस्येति दृश्यते ।**
**ताभ्यां परः षडक्षरः प्र या तनुशिरा नाम ॥२५॥**

यस्याः एकादशाक्षरौ द्वौ पादौ, तयोर्मध्ये च एकः षड़क्षरः पादः सा पिपीलिकामध्या नाम उष्णिक् वेदितव्या। यथा—'हरी यस्य सुयुजा विव्रतावेः' ( ऋ' १०।१०५।२ )।

यत्र च एकादशाक्षराभ्यां पादाभ्यां परः षड़क्षरः पादो भवति सा तनुशिरा नाम उष्णिक् वेदितव्या। यथा—'प्र या घोषे भृगवाणे न शोभे' ( ऋ' १।१२०।५ )।

**आद्यः पञ्चाक्षरः पाद उत्तरेऽष्टाक्षरास्त्रयः ।**
**अनुष्टुब्गर्भैव सोष्णिक् सागस्त्येऽस्ति पितुं न्विति ॥२६**

यस्या आद्यः पादः पञ्चाक्षरः उत्तरे त्रयः पादा अष्टाक्षरा सैषा अनुष्टुब्गर्भा उष्णिग् भवति। सा च अगस्त्यर्षिदृष्टे मन्त्रे भवति। यथा—'पितुन्नु स्तोषम्' ( ऋ' १।१८७।१)।

## अनुष्टुप्

**द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः ।**
**कृतिर्द्वौ द्वादशाक्षरावेकश्चाष्टाक्षरः परः ॥२७॥**

या द्वात्रिंशदक्षरा सानुष्टुब् भवति। तस्याः चत्वारः पादा अष्टाक्षराः समानाः भवन्ति। यथा—'गायन्ति त्वा गायत्रिणः' (ऋ' १।१०।१)

यस्याः द्वौ पादौ द्वादशाक्षरौ स्तः पर एकः तृतीय इति यावत्

पादः अष्टाक्षरो भवति सा अनुष्टुप् कृतिर्नाम वेदितव्या। यथा— मा कस्मै धातमभ्यमित्रिणे (ऋ॑ १।१२०।८)।

**यस्यास्त्वष्टाक्षरो मध्ये सा पिपीलिकमध्यमा।**

**नवकौ द्वादशी द्व्यूना तां विद्वांसेति काविराट्॥२८॥**

यस्याः द्वादशाक्षरयोः पादयोर्मध्ये अष्टाक्षरः पादो भवति सा पिपीलिकामध्यमा नाम अनुष्टुप् भवति। यथा—पर्य्यू षु प्रधन्व (ऋ॑ ९।११०।१)।

यस्या आद्यान्त्यौ पादौ नवकौ नवाक्षरौ मध्ये च द्वादशी पादः द्वादशाक्षरः पादः सा द्व्यूना द्वाभ्यां न्यूना विराट् काविराट् नाम भवति। यथा—'ता विद्वांसा हवामहे' (ऋ॑ १।१२०।३)

**तेषामेकाधिकावन्त्यौ नष्टरूपा विपृच्छामि।**

**दशाक्षरास्त्रयो विराट् त्रयो वैकादशाक्षराः॥२९॥**

तेषामेव नवकद्वादशिनां पादानां यदा अन्त्यौ द्वितीयतृतीयपादौ इति यावत् एकाधिकौ एकैकाक्षरेणाधिकौ भवतः—नवाक्षरः प्रथमः पादः, दशाक्षरो द्वितीयः, त्रयोदशाक्षरश्च तृतीय इति यावत् भवति— तदा सा अनुष्टुप् नष्टरूपा नाम वेदितव्या। यथा—'विपृच्छामि पाक्या न देवान्' (ऋ॑ १।१२०।४)।

यस्याः दशाक्षरास्त्रयः पादाः एकादशाक्षरा वा त्रयः पादाः भवन्ति सा विराट् नाम अनुष्टुप् वेदितव्या। यथा—श्रुधी हवं विपिपानस्याद्रेः (ऋ॑ ७।२२।४), यथा वा—अग्न इन्द्रश्च दाशुषः (ऋ॑ ३।२५।४।)

**षन्महापदपंक्तिस्तु षट्कोऽन्त्याः पञ्च पञ्चकाः।**

**मा कस्मै पर्यू षु प्र धाग्ने तव स्वादिष्ठा ऋचः॥३०॥**

षड्भिः पादैर्या अनुष्टुप् सा महापदपङ्क्तिर्नाम वेदितव्या। तस्याश्च अन्त्यः षष्ठ इति यावत् पादः षट्कः षडक्षरः, अन्ये च पञ्च पादाः पञ्चाक्षरा भवन्ति। यथा—तव स्वादिष्ठाग्ने (ऋ ४।१०।५)।

'मा कस्मै', 'पर्य्यू षु,' 'श्रुधि', 'अग्ने,' 'तव स्वादिष्ठा' इत्येता ऋचः कृतिप्रभृतीनां पूर्व्वोक्तानाम् उदाहरणानि।

## बृहती

चतुष्पदा तु बृहती प्रायः षट्त्रिंशदक्षरा।
अष्टाक्षरास्त्रयः पादास्तृतीयो द्वादशाक्षरः ॥३१॥

बृहती षट्त्रिंशदक्षरा चतुष्पदा च भवति। तस्याः त्रयः पादाः प्रथमद्वितीयचतुर्था इति यावत् अष्टाक्षरा भवन्ति तृतीयश्च पादो द्वादशाक्षरो भवति। एषा च बृहती प्रायेण प्रयुज्यते।

पुरस्ताद्‌बृहती नाम प्रथमे द्वादशाक्षरे।
उपरिष्टाद्‌बृहत्यन्त्ये द्वितीये न्यङ्कुसारिणी ॥३२॥
स्कन्धोग्रीवीउरोबृहती त्वेधैनां प्रतिजानते।
त्रयो द्वादशका यस्याः सा ह्योर्ध्वबृहती विराट् ॥३३॥

प्रथमे पादे द्वादशाक्षरे सति सा पुरस्ताद्‌बृहती नाम वेदितव्या। यथा—महो यः अतिः शवसो असाम्या (ऋ १०।२२।३)। यथा वा—अधोनुत सप्ततिञ्च सप्त (ऋ १०।८३।१५)। अन्तिमे पादे चतुर्थे पादे इति यावत् द्वादशाक्षरे सति सा उपरिष्टाद् बृहती नाम। यथा—

न तमंहो न दुरितम् ( ऋ० १०।१२६।१ )। द्वितीये पादे द्वादशाक्षरे सति सा न्यङ्कुसारिणी यस्याः स्कन्धोग्रीवी उरोबृहती वा नाम भवति। एवं त्रेधा त्रिभिर्नामभिरेनां प्रतिजानते आचार्या इति शेषः। यथा—मत्स्यपायि ते महः ( ऋ० १।१७५।१ )। यथा वा— ईशानमिद्द्यौर्गूर्तवसुः ( ऋ० १०।१३२।१ )।

यस्या बृहत्या त्रयः पादा द्वादशाक्षराः सा ऊर्ध्वबृहती विराट् नाम वेदितव्या। यथा—अजीजनो अमृता मर्त्येषु ( ऋ० ८।११०।४ )।

**महो योऽधीन्न तं मत्सीशानमिदजीजनः।**
**अष्टिनोर्दशकौ मध्ये विष्टारबृहती युवम् ॥३४॥**

'महो यः', 'अधीत्', 'न तम्,' 'मत्सि,' 'ईशानमित्,' 'अजीजनः' इत्येता ऋचो निर्दिष्टलक्षणानामनिर्दिष्टोदाहरणानां पुरोबृहती-प्रभृतीनामुदाहरणानि।

यस्याः बृहत्या अष्टिनोरष्टाक्षरयोः पादयोर्मध्ये दशकौ दशाक्षरौ द्वौ पादौ सा विष्टारबृहती नाम। यथा,—'युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना' ... 'युवं ह्यास्तं महोरन्' ( ऋ० १।१२०।७ )।

**एकागस्त्येऽपि तुस्तोमे नवाक्षरपादोत्तमा।**
**द्वयोश्चोपेदमाहार्षं सर्वे बृहे नवेऽक्षराः ॥३५॥**

अगस्त्यर्षिदृष्टे अन्नस्तुतिसूक्ते उत्तमान्त्या एका ऋक् नवाक्षर-पादा विद्यते। सा च बृहत्येव। यथा—तं त्वा वयम्पितो वचोभिः ( ऋ० १।१८७।११ )।

'उपेदमुप पर्चनम्' ( ऋ० ६।२८।८ ) 'आहार्षं त्वा विदं त्वा'

( ऋ॰ १०।१६९।५ ) इत्येतयोर्द्वयोः ऋचोः सर्वं बृहे नवाक्षराः पादा भवन्ति। एते च बृहतीच्छन्दस्के एव।

**त्रयोदशाक्षरौ च द्वौ मध्ये चाष्टाक्षरो भवेत्।**

**अभि वो वीरमित्येषा सा पिपीलिकमध्यमा ॥३६॥**

यस्याः द्वौ पादौ प्रथमतृतीयौ इति यावत् त्रयोदशाक्षरौ भवतः मध्ये च अष्टाक्षरः पादो भवति सा पिपीलिकामध्यमा नाम बृहती वेदितव्या। 'अभि वो वीरमन्धसो मदेषु गाय' ( ऋ॰ ८।४६।१४ )।

**नवकाष्टादशसहैकः परमोऽष्ट च यदि पादाः।**

**बृहती विषमपदा सा सनितः सुसनितरुग्र ॥३७॥**

नवाक्षरः प्रथमः पादः, अष्टाक्षरो द्वितीयः पादः, एकादशाक्षरस्तृतीयः, परमः अन्त्यश्चतुर्थं इति यावत् पादः अष्टाक्षरः इति ईदृशा यदि पादा भवन्ति तदा सा बृहती विषमपदा नाम वेदितव्या। यथा—'सनितः सुसनितरुग्र' ( ऋ॰ ८।४६।२० )

## पङ्क्तिः

**पंक्तिरष्टाक्षराः पञ्च चत्वारो दशका विराट्।**

**आदेशेऽष्टाक्षरौ विद्यात् सोपसर्गेषु नामसु ॥३८॥**

यस्या अष्टाक्षराः पञ्च पादा भवन्ति सा पङ्क्तिरिष्यते। यथा—'इन्द्रो मदाय वावृधे' ( ऋ॰ १।८१।१ )।

यस्याश्चत्वारो दशाक्षराः पादा भवन्ति सा विराट् पङ्क्तिर्भवति। यथा—'मन्ये त्वा यज्ञियं यज्ञियानाम्' ( ऋ॰ ८।९६।४ )।

आस्तारपङ्क्तिरित्येवमादिषु सोपसर्गेषु नामसु आदितः अन्ततो मध्यतो वा अष्टाक्षरौ पादौ विद्यात्।

**युग्मावष्टाक्षरौ पादावयुजौ द्वादशाक्षरौ।**

**सा सतोबृहती नाम विपरीता विपर्य्यये ॥३९॥**

यस्याः युग्मौ द्वितीयचतुर्थौ इति यावत् पादौ अष्टाक्षरौ भवतः अयुजौ अयुग्मौ प्रथमतृतीयौ इति यावत् पादौ द्वादशाक्षरौ सा पङ्क्तिः सतोबृहती नाम वेदितव्या। यथा—'मा ते राधांसि मा त ऊतयो वसो' ( ऋ॑ १।८४।२० )।

तेषां पादानां विपर्य्यये युग्मौ पादौ द्वादशाक्षरौ अयुजौ च अष्टाक्षरौ एवं सति इति यावत् सा विपरीता पङ्क्तिर्नाम वेदितव्या। यथा—'य ऋष्वः श्रावयत् सखा' ( ऋ॑ ८।४६।१२ )।

**आस्तारपंक्तिरादितः प्रस्तारपंक्तिरन्ततः।**

**संस्तारपंक्तिर्मध्यतो विष्टारपंक्तिर्बाह्यतः ॥४०॥**

यस्या आदितः आदौ अष्टाक्षरौ पादौ अन्तगौ द्वादशाक्षरौ पादौ सा आस्तारपङ्क्तिर्नाम इत्यर्थः। यथा—'अग्निं नरो दीधितिभिः ( ऋ॑ १०।२१।१ )।

यस्याः अन्ततः अन्तगौ पादौ अष्टाक्षरौ आद्यौ च द्वादशाक्षरौ सा प्रस्तारपङ्क्तिर्नामित्यर्थः। यथा—मह्नि द्यावापृथिवी भूतमुर्वी ( ऋ॑ १०।९३।१ )।

यस्याः मध्येऽष्टाक्षरौ पादौ आद्यान्तगौ द्वादशाक्षरौ भवतः सा संस्तारपंक्तिर्नाम। यथा—पितुभृतो न तन्तु मित्सुदानवः ( ऋ॑ १०।१७२।३ )।

यस्या बाह्यत आद्यान्तगौ पादौ इति यावत् अष्टाक्षरौ मध्ये च

द्वादशाक्षरौ पादौ सा विष्टारपङ्क्तिर्नाम इत्यर्थः। यथा—'अग्ने तव श्रवो वयः' (ऋ॰ १०।१४०।१)।

**मन्ये त्वा मा ते राधांसि य ऋष्व अग्निं महीति च।**
**पितुभृतो नाग्ने तव ता ऋचोऽत्र निदर्शनम् ॥४१॥**

'मन्ये त्वा,' 'मा ते राधांसि,' 'य ऋष्व,' 'अग्नि', 'महि,' 'पितुभृतो न,' 'अग्ने तव'—इत्येता ऋचोऽत्र निदर्शनं यथाक्रमं विराट्पङ्क्तिप्रभृतीनां पुरस्तान्निर्दिष्टलक्षणानाम्।

## त्रिष्टुप्

**चतुश्चत्वारिंशत्त्रिष्टुबक्षराणि चतुष्पदा।**
**एकादशाक्षरैः पादैर्द्वौ चेत्तु द्वादशाक्षरौ ॥४२॥**
**प्रायस्योपजगत्येषा परस्यास्य तु सा त्रिष्टुप्।**
**वैराजजागतैः पादैर्यो वाचेत्यभिसारिणी ॥४३॥**

चतुश्चत्वारिंशदक्षरा एकादशाक्षरैः चतुर्भिः पादैः चतुष्पदा त्रिष्टुप् भवति। यथा—'पिबा सोममभि यमुग्र तर्दः' (ऋ॰ ६।१७।१)।

यदि द्वौ द्वादशाक्षरौ पादौ भवतः द्वौ च एकादशाक्षरौ तदा परस्य जागतस्य प्रायसि भवा प्रायस्या जगतीप्राये वर्त्तमाना उपजगती नाम वेदितव्या। यथा—सो चिन्नु वृष्टिर्यूथ्या स्वा सचा (ऋ॰ १०।२३।४)। अस्य तु त्रिष्टुभः प्रायस्या सा त्रिष्टुप् नाम्ना वेदितव्या। यथा—सनेमि चक्रमजरं वि वावृते (ऋ॰ १।१६४।१४)।

यस्याः द्वौ पादौ दशाक्षरौ द्वौ च द्वादशाक्षरौ सा अभिसारिणी नाम। यथा—यो वाचा विवाचो मृध्रवाचः ( ऋ॰ १०।२३।५ )।

नवको दशको वा स्यादेकोऽनेकोऽपि त्रिष्टुभः।
एकादशाक्षरश्चापि विराट्स्थाना ह नाम सा ॥४४॥

त्रिष्टुभः पाद एकोऽपि अनेकोऽपि वा नवको वा दशको वा स्यात्—तथा च यदि एको नवकः द्वौ दशकौ भवतः, एको दशकः द्वौ नवकौ वा तदा सा विराट्स्थाना नाम। यथा—अधो ह्यवमिन्द्र मा रिषण्यः ( ऋ॰ २।११।१ )।

दशाक्षरौ पादावुत्तरेऽष्टाक्षरास्त्रयः।
विराट्पूर्वा ह नामैषा त्रिष्टुप् पंक्त्युत्तरैव वा ॥४५॥

यस्याः पूर्वौ द्वौ पादौ दशाक्षरौ भवतः उत्तरे अष्टाक्षरास्त्रयः पादा भवन्ति सैषा त्रिष्टुप् विराट्पूर्वा पङ्क्त्युत्तरा वा वेदितव्या। यथा—'एवेन्द्राग्निभ्यामहावि हव्यम्' ( ऋ॰ ५।८६।६ )।

त्रयश्चैकादशाक्षरा एकश्चाष्टाक्षरः परः।
विराड्रूपा ह नामैषा त्रिष्टुम्नाक्षरसम्पदा ॥४६॥

यस्यास्त्रयः पादा एकादशाक्षराः पर एकश्च अष्टाक्षरः पादः सा विराड्रूपा नाम त्रिष्टुप् वेदितव्या यद्यपि अक्षरसम्पत् नास्ति। यथा—कोलक्नोरश्म आ भुवः ( ऋ॰ ५।१९।५ )।

त्रयश्च द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित्।
एषा ज्योतिष्मती नाम ततो ज्योतिर्यतोऽष्टकः ॥४७॥

यस्यास्त्रयः पादा द्वादशाक्षराः एकः पादश्च अष्टाक्षरः भवति सा त्रिष्टुप् ज्योतिष्मती नाम वेदितव्या। यतोऽष्टकः पादस्ततो ज्योतिरित्युच्यते। यथा—यद्वा यज्ञं मनवे संमिमिक्षथुः (ऋ० ८।१०।१) इति मध्ये ज्योतिः। अग्निनेन्द्रेण वरुणेन विष्णुना (ऋ० ८।३५।२) इत्युपरिष्टाद् ज्योतिः।

**चत्वारोऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः।**
**सा महाबृहती नाम यवमध्या तु मध्यमे॥ ४८॥**

यस्याश्चत्वारः पादा अष्टाक्षरा एकश्च पादो द्वादशाक्षरः सा त्रिष्टुप् महाबृहती नाम। यथा—'नमोवाके प्रस्थिते अध्वरे नरा' (ऋ० ८।३५।२३)।

मध्यमे पादे द्वादशाक्षरे सति सा यवमध्या नाम त्रिष्टुप् भवति। तथाच—यस्याः आद्यौ पादौ अष्टाक्षरौ तृतीयः पादो द्वादशाक्षरः चतुर्थपञ्चमौ च पादौ अष्टाक्षरौ सा त्रिष्टुप् यवमध्या नाम ज्ञेया इत्यर्थः। यथा—'बृहद्भिरग्ने अर्चिभिः' (ऋ० ६।४८।७)।

**सो चिन्नु सनेमि श्रुधीव क्रीलन्यद्वाग्निनेन्द्रेण।**
**नमोवाके बृहद्भिश्च ता ऋचोऽत्र निदर्शनम्॥४९॥**

'सो चिन्नु', 'सनेमि' 'श्रुधि,' 'एव,' क्रीलन्,' 'यद्वा,' 'अग्निनेन्द्रेण,' 'नमो वाके,' 'बृहद्भिश्च' इत्येता ऋचोऽत्रोदाहरणानि उपरिष्टान्निर्दिष्टलक्षणानां छन्दसाम्।

## जगती

**पञ्चाशज्जगती द्व्यूना चत्वारो द्वादशाक्षराः ।**
**तदस्य बहुलं वृत्तं महापंक्तिः षडष्टकाः ॥**
**अष्टकौ सप्तकः षट्कः दशको नवकश्च वा ॥५०॥**

यत्र द्वाभ्यामूनानि पञ्चाशदक्षराणि, अष्टचत्वारिंशदक्षराणि, साजगती भवति । तत्र च द्वादशाक्षराश्चत्वारः पादा भवन्ति । एषा च जगती प्रायेण भवतीत्यर्थः । यथा—'प्र देवमच्छा मधुमन्त इन्दवः' ( ऋ॰ ९।६८।१) ।

यस्याः षट् अष्टाक्षराः पादा भवन्ति सा जगती महापङ्क्तिरित्युच्यते । यस्याश्च द्वौ पादौ अष्टकौ अष्टाक्षरौ एकः पादः सप्ताक्षरः अपरः षडक्षरः, अन्यो दशाक्षरः, अपरश्च नवाक्षरः सा च महापङ्क्तिर्भवति । यथा—सेहान उग्र पृतना अभिद्रुहः ( ऋ॰ ८।३७।२ ) ; सूर्यं विषमासजामि ( ऋ॰ १।१९१।१० ) ।

**महासतोबृहत्यर्द्धे व्यूहयोरेतयोः सह ।**
**सम्पाते त्वेति पादान्ते दैववान् सप्तविंशके ॥५१॥**

एतयोर्ऋचोः महापङ्क्त्योरर्द्धेऽष्टाक्षराद्युक्तलक्षणपादत्रये सति द्वादशाक्षरयोः पादयोः सह व्यूहयोरिव सतोर्महासतोबृहती नाम जगती वेदितव्या । यथा—आ यः पप्रौ भानुना रोदसी उभे ( ऋ॰ ६।४८।६ ), विश्वासां गृहपतिर्विशाम् ( ऋ॰ ६।४८।८ ) ।

सम्पाते त्वेतस्य किमपि व्याख्यानं नोपलभ्यते ।

**अस्मा ऊ षूभे यदिन्द्र सेहान उग्रेति षट् ।**
**आ यः पप्रौ च विश्वासां ता ऋचोऽत्र निदर्शनम् ॥५२॥**

अस्मा उषु ( ऋ॰ ८।४१।१ ), उभे यदिन्द्र ( ऋ॰ १०।१३४।१ ), सेहान उग्र ( ऋ॰ ८।३७।२ ) इत्यादयः षड् चः, आ यः पप्रौ, विश्वासाम्—इत्येता ऋचः महापङ्क्तिप्रभृतीनाम् उदाहरणम्।

**द्वावतिच्छन्दसां वर्गा उत्तरौ चतुरुत्तरौ।**

**प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा ॥५३॥**

जगत्या उत्तरौ अतिच्छन्दसां द्वौ वर्गौ वेदितव्यौ। अतिजगत्यादय एकः कृत्यादयो द्वितीयः।

आसां मध्ये प्रथमा या सा द्विपञ्चाशदक्षरा अतिजगती नाम वेदितव्या। यथा—'तमिन्द्रं जोहवीमि मघवा न सुग्रम्' ( ऋ॰ ८।९७।१३ )।

**षट्पञ्चाशत्तु शक्वरी षष्टिरेवातिशक्वरी**

**उत्तराष्टिश्चतुःषष्टिस्ततोऽष्टाषष्टिरत्यष्टिः ॥५४॥**

षट्पञ्चाशदक्षरा शक्वरी भवति। यथा—'प्रोष्वस्मै पुरोरथम्' ( ऋ॰ १०।१३३।१ )।

यत्र तु षष्टिरक्षराणि सा अतिशक्वरी भवति। यथा—'सुषुमा यातमद्रिभिः' ( ऋ॰ १।१३७।१ )।

यत्र चतुःषष्टिरक्षराणि सा अष्टि र्नाम। यथा—'त्रिकद्रुकेषु महिषो यवाशिरम्' ( ऋ॰ २।२२।१ )।

यत्र अष्टाषष्टिरक्षराणि सा अत्यष्टिर्भवति। यथा—'अयारुचा हरिण्या पुनानः' ( ऋ॰ ९।१११।१ )

**धृतिः पूर्वा द्विसप्ततिः षट्सप्ततिस्त्वतिधृतिः।**

**सर्वा दाशतयीष्वेता उत्तरास्तु सुभेषजे ॥५५॥**

यस्या द्विसप्ततिरक्षराणि भवन्ति सा धृति र्नाम। यथा—'सखे सखायमभ्यावववृत्स्वाशु" ( ऋ॰ ४।१।३ )।

यस्याः षट्सप्तत्यक्षराणि भवन्ति सा अतिधृतिः। यथा—'स हि शर्धो न मारुतन्तुविष्वनिः ( ऋ॰ १।१२७।६ )।

एता अतिजगत्यादयः सर्वा दाशतयीषु विद्यन्ते। उत्तरा या वक्ष्यन्ते ता सुभेषजे सुभेषजऋषिदृष्टे मन्त्र ऋचो द्रष्टव्याः।

कृतिः प्रकृतिराकृति र्विकृतिः संकृतिस्तथा।

षष्ठी चाभिकृतिर्नाम सप्तमुत्कृतिरुच्यते ॥५६॥

एताः कृत्यादयः सप्त सुभेषजे द्रष्टव्याः।

अशीतिश्चतुरशीतिरष्टाशीतिर्द्वि र्नवतिः।

षण्णवतिः शतं पूर्णमुत्तमा तु चतुःशतम् ॥५७॥

तत्र च कृत्यादीनामक्षरपरिमाणान्युच्यन्ते। तथा च—कृतेः अशीतिरक्षराणि, प्रकृतेः चतुरशीतिः, आकृतेः अष्टाशीतिः, विकृतेः द्विनवतिः, संकृतेः षण्णवतिः, अभिकृतेः शतं, उत्कृतेः चतुरधिकं शतम् अक्षराणि भवन्तीत्यर्थः।

तमिन्द्रं प्रो षु सुषुम त्रिकद्रुकेष्वया रुचा।

सखे च स हि शर्धश्च मध्यमो वर्ग उच्यते ॥५८॥

'तमिन्द्र', 'प्रोषु', 'सुषुमा', त्रिकद्रुकेषु', 'अयारुचा,' 'सखे', 'स हि शर्धः' इत्येता ऋचः अतिजगत्यादीनामुदाहरणानि। अति जगत्यादयश्च छन्दसां मध्यमो द्वितीयोवर्गः।

आसु कृतिस्तु प्रकृतिर्ध्रुवं पूर्वा ततः परा।

आकृतिर्यदि ते माता मेषो विकृतिरुच्यते ॥५९॥

संकृतिस्तु न वै तत्र देवो अग्निस्त्वभिकृतिः ।
सर्वस्येत्युत्कृतिस्तत्र तृतीयो वर्ग उच्यते ॥६०॥

कृत्यादीनामुदाहरणान्युच्यन्ते । तथा च कृतिः—'आसुरैरु परावतः' । प्रकृतिः—'ध्रुवं पूर्व्याः ।' ततः प्रकृतेः परा या आकृतिः—'यदि ते माता ।' 'मेषो' विकृतिरुच्यते । सङ्कृतिस्तु तस्मिन् सुभेषजेऽपि न विद्यते । एवं प्रायेण वर्णयन्ति । केचित् वर्णयन्ति—सङ्कृतिः 'न व तत्र' इत्येतदुदाहरणम् । अभिकृतिः—'देवा अग्निः स्विष्टकृत्' । उत्कृतिः—'सर्वस्य' इति । अत्रास्याम् उत्कृतौ छन्दसां तृतीयो वर्गः समाप्यते ।

# सप्तदशं पटलम्

एवं क्लृप्तप्रमाणानां छन्दसामुपदिश्यते ।
एकद्व्यूनाधिका सैव निचृदूनाधिका भुरिक् ॥१॥

एवं क्लृप्तप्रमाणानां निर्दिष्टलक्षणानाम् एकविंशतिः छन्दसां विशेष उपदिश्यते । एकेन अक्षरेण द्वाभ्यां वाक्षराभ्यां या ऊना अधिका वा ऋक् भवति सा तच्छन्दस्कैव भवति । एकेनाक्षरेण ऊना ऋक् निचृत् भवति ; एकेन चाधिका ऋक् भुरिक् भवति । यथा—निचृत्—'यः शुक्र इव सूर्यः' ( ऋ' १।४३।५ ), भुरिक्—'परिधामानि यानि ते' ( ऋ' ८।६६।२ ) ।

विराजस्तूत्तरस्याहुर्द्वाभ्यां या विषये स्थिताः ।
स्वराज एवं पूर्वस्य याः काश्चैवं गता ऋचः ॥२॥

द्वाभ्यामक्षराभ्यां या ऋचोऽधिका न्यूना वा विषये मध्ये स्थिता उत्तरस्य पूर्व्वस्य च छन्दस स्ता विराज आहुरुत्तरस्य, स्वराजश्च पूर्व्वस्य। यथा—षड्विंशत्यक्षरा गायत्र्यः स्वराजो गायत्र्यो भवन्ति, उष्णिहः प्रायेण विराज उष्णिहो भवन्ति। यथा—जोषा सवितर्यस्य ते ( ऋ' १०।१५८।२ ) इति स्वराड् गायत्री। अतिथिं मानुषाणाम् ( ऋ' ८।२३।२५ ) इति विराड् उष्णिक्।

याः काश्चिद्बहुपादास्तु गायत्र्यो हीनतां गताः ।
अक्षरैर्बहुभिस्तास्तु गायत्र्या उपधारयेत् ॥३॥

गायत्र्यः द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिर्वा न्यूनाः सत्यो गायत्र्य एव विराजो भवन्ति। पूर्वस्य छन्दसोऽभावात्।

ता राड्विराट् स्वराट् सम्राट् स्ववशिनी परमेष्ठी ।
प्रतिष्ठा प्रत्नममृतं वृषा शुक्रं जीवं पयः ॥४॥

तप्तमर्णोंऽशोंऽम्भोऽम्बु वार्य्यापश्चोदकमुत्तमम् ।
दैवतं छन्दसामत्र वक्ष्यते तत उत्तरम् ॥५॥

द्वाभ्यां अक्षराभ्यामधिका न्यूना वा विषये मध्ये स्थिता ऋचो गायत्र्याद्यनुसारेण यथाक्रमं राट्, स्वराट्, सम्राट्, स्ववशिनी, परमेष्ठी, प्रतिष्ठा, प्रत्नम्, अमृतम्, वृषा, शुक्रम्, जीवम्, पयः, तप्तम्, अर्णः अंशः, अम्भः, अम्बु वारि, आपः, उदकम्—इति उच्यन्ते।

तथाच—एकविंशति विराजः द्वाविंशत्यक्षरादयो द्वाधिकशताक्षरपर्यन्ताः। यथा—

| | | | |
|---|---|---|---|
| राट्— | २२ ( गायत्री ) | जीवम्— | ६६ ( अत्यष्टिः ) |
| विराट्— | २६ ( उष्णिक् ) | पयः— | ७० ( धृतिः ) |
| स्वराट्— | ३० ( अनुष्टुप् ) | तृप्तम्— | ७४ ( अतिधृतिः ) |
| सम्राट्— | ३४ ( बृहती ) | भरुणम्— | ७८ ( कृतिः ) |
| स्ववशिनी— | ३८ ( पङ्क्तिः ) | अंशः— | ८२ ( प्रकृतिः ) |
| परमेष्ठी— | ४२ ( त्रिष्टुप् ) | अम्भः— | ८६ ( आकृतिः ) |
| प्रतिष्ठा— | ४६ ( जगती ) | अम्ब— | ९० ( विकृतिः ) |
| प्रत्नम्— | ५० ( अतिजगती | वारि— | ९४ ( सङ्कृतिः ) |
| अमृतम्— | ५४ ( शक्वरी ) | अप— | ९८ ( अभिकृतिः ) |
| वृषा— | ५८ ( अतिशक्वरी | उदकम्— | १०२ ( उत्कृतिः ) |
| शुक्रम्— | ६२ ( अष्टिः ) | | |

एवं स्वराजश्च।

**अग्नेर्गायत्र्यतोऽधि द्वे भक्त्या दैवतमाहतुः।**
**सप्तानां छन्दसामृचौ न पंक्तेः सा तु वासवी ॥६॥**

'अग्नेर्गायत्र्यभवत् सयुग् वा' ( ऋ° १०।१३०।४-५ ) इत्यारभ्य द्वे ऋचौ भक्त्या सप्तानां छन्दसां दैवतमाहतुः। तस्माद् अग्निदेवताका गायत्री, सावित्री उष्णिक्, सोमी अनुष्टुप्, बृहती बार्हस्पत्या, मैत्रावरुणी विराट्, ऐन्द्री त्रिष्टुप्, वैश्वदेवी जगती। छन्दसां दैवतज्ञाने धर्मः प्रयोजनम्। भवत्येव च संशये छन्दसां दैवतेनाध्यवसायः। यथा—'तव स्वादिष्ठा' ( ऋ° ४।१०।५ ), 'शिवा नः सख्या' ( ऋ° ४।१०।८ ) इत्युष्णिगनुष्टुभोर्मध्ये 'घृतं न पूतम्' ( ऋ° ४।१०।६ ) इति द्वे ऋचौ दैवतेन स्वराजी गायत्र्यौ अध्यवसीयेताम्, न विराजावुष्णिहौ।

पङ्क्तौ दैवतमिति ऋचौ नाहतुः। सा पङ्क्तिर्वासवी वेदितव्या।

**प्राजापत्या त्वतिच्छन्दा विच्छन्दा वायुदैवता।**

**द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृता ॥७॥**

अतिच्छन्दा अतिच्छन्दांसि अतिजगत्यादीनि प्राजापत्यानि ज्ञेयानि। विच्छन्दांसि वायुदैवतानि वेदितव्यानि। विच्छन्दांसि पदपंक्तिपुरउष्णिगाद्यानि।

या द्विपदा ऋक् सा पौरुषी, या एकपदा सा ब्राह्मी स्मृता।

**एतेनैव क्रमेणैषां वर्णतो भक्तिरुच्यते।**

**श्वेतं च सारङ्गमतः पिशङ्गं कृष्णमेव च ॥८॥**

**नीलं च लोहितं चैव सुवर्णमिव सप्तमम्।**

**अरुणं श्यामगौरे च बभ्रु वै नकुलं यथा ॥९॥**

येन क्रमेण छन्दसां दैवतमुक्तं तेनैव क्रमेण एतेषां वर्णतो भक्तिः वर्णविभाग उच्यते इत्यर्थः। तथा च—श्वेतं गायत्रम्। सारङ्गं शुक्लकृष्णम् औष्णिहम्। पिशङ्गं रोचनावर्णमानुष्टुभम्। कृष्णं बार्हतम्। नीलं वैराजम्। लोहितं त्रैष्टुभम्। सुवर्णसदृशवर्णं जागतम्। अरुणं पाङ्क्तम्। श्यामं अतिच्छन्दः। गौरं विच्छन्दः। बभ्रु कपिलवर्णं द्वैपदं छन्दः। नकुलवर्णं च एकपदं छन्दः।

**पृश्निवर्णं तु वैराजं निचृच्छ्यावं पृषद्भुरिक्।**

**ब्रह्मसामर्ग्यजुश्छन्दः कपिलं वर्णतः स्मृतम् ॥१०॥**

पृश्निवर्णं बहुवर्णं वैराजम्। निचृत् श्यावं भवति। भुरिक् पृषद् भवति। ब्रह्मणः सामर्ग्यजुषां च छन्दः वर्णतः कपिलं स्मृतम्।

**माप्रमाप्रतिमोपमासंमा च चतुरक्षरात् ।**

**चतुरुत्तरमुद्यन्ति पञ्चच्छन्दांसि तानि ह ॥११॥**

मा, प्रमा, प्रतिमा, उपमा, संमा च इत्येतानि चतुरक्षरात् चतुरुत्तराणि—गायत्र्याः पूर्व्वाणि पञ्च छन्दांसि वेदितव्यानि। तथाच—चतुरक्षरा मा, अष्टाक्षरा प्रमा, द्वादशाक्षरा प्रतिमा, षोडशाक्षरा उपमा, विंशत्यक्षरा संमा।

**हषीका सषीका मषीका सर्वमात्रा विराट्कामा।**

**द्व्यक्षरादीनि मादीनां वैराजान्यनुचक्षते ॥१२॥**

हषिकादीनि च द्व्यक्षरादीनि चतुरुत्तराणि अष्टादशाक्षरपर्य्यन्तानि मादीनां वैराजान्यनुचक्षते आचार्य्याः। तथाच—द्व्यक्षरा मा-विराट् हषिका इत्युच्यते ; एवमन्यत्र।

**अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम् ।**

**विद्याद् विप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचाम् ॥१३॥**

पादैः वृत्तैः अक्षरैश्च विप्रतिपन्नानाम् ऋचां बलवत्तरं निमित्तम् अक्षराण्येव विद्यात्। यथा—सूर्य्ये विषमासजामि (ऋ' १।१९१। १०-१२) पादैर्विप्रतिपन्नास्तिस्र एता ऋचोऽक्षरैर्जगत्योऽध्यवसीयन्ते ; 'नवानां नवतीनाम्' (ऋ' १।१९१।१३) इति च पङ्क्तिः। यथाच—अभ्रप्रुषो न वाचा प्रुषा वसु (ऋ' १०।७७।१) इति वृत्तैः (१७।२२) विप्रतिपन्ना अक्षरैस्त्रिष्टुब् अध्यवसीयते। तथा—यास्ते प्रजा अमृतस्य (ऋ' १।४३।९) इति चानुष्टुप्। तथा च—ये नः सपत्ना अप ते भवन्तु (ऋ' १०।१२८।९) इति त्रिष्टुप्प्राये च अक्षरैरेव जगत्यध्यवसीयते।

**व्यूहैदेकाक्षरीभावान् पादेषूनेषु सम्पदि।**

**क्षैप्रवर्णांश्च संयोगान् व्यवेयात् सदृशैः स्वरैः ॥१४॥**

ऊनेषु पादेषु सम्पदि कर्त्तव्यायां एकाक्षरीभावान् सन्धीन् व्यूहेत् पृथक् कुर्य्यात्। यथा—प्रेता जयता नरः ( ऋ॰ १०।१०३।१३ ) इत्यत्र प्र इता जयता नरः।

क्षैप्रवर्णान् संयोगान् सान्तःस्थान् संयोगान् सदृशैः स्वरैर्व्यंवेयात् व्यवधानं कुर्य्यात् सदृशैः समानस्थानैः स्वरैः। यथा—त्र्यम्बकं यजामहे ( ऋ॰ ७।५९।१२ ) इत्यत्र त्रियम्बकं यजामहे।

**पदाभेदेन पादानां विभागोऽभिसमीक्ष्य तु।**

**छन्दसः सम्पदं तां तां यां यां मन्येत पादतः॥१५॥**

छन्दसः पादतः यां यां सम्पदं मन्येत तां तां सम्यक् पूर्व्वमभिसमीक्ष्य पश्चात् पदानामभेदेन पादानां विभागः कर्त्तव्यः, यद्यपि उत्तरैः पादज्ञानहेतुभिर्विरोधो भवति। यथा—माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य पीबा सोमस्य वज्रिवः ( ऋ॰ ८।३७।२ ) इत्येतयोः पादयोः पदाभेदेन अष्टाक्षरयोः क्रियमाणयोः यद्यपि प्रायोवृत्तसम्पद् भवति तथापि अनादृत्य तां माध्यन्दिनस्य सवनस्य इत्येव नवाक्षरविभागः कर्त्तव्यः।

**प्रायोऽर्थो वृत्तमित्येते पादज्ञानस्य हेतवः।**

**विशेषसन्निपाते तु पूर्वं पूर्वं परं परम्॥१६॥**

प्रायः, अर्थः, वृत्तम्—इत्येते पादज्ञानस्य हेतवो भवन्ति। प्रायो यथा—गोर्न पर्व विरदा तिरश्चा ( ऋ॰ १।६१।१२ ) इत्येतस्याः प्रायेण एकादशाक्षरपादाया ऋचः गोर्नेति दशाक्षरः पादः। तं च प्रायोऽनुरोधात् व्यूहेन एकादशाक्षरं कृत्वा पादविभागः क्रियते। अर्थो यथा—स गृणानो अद्भिर्देववानिति ( ऋ॰ १०।६१।२६ ) अत्र अर्थानुरोधात् 'इति' इत्यतः परमेव क्रियते छेदः न तु 'देववान्' इत्यतः परम्। वृत्तं यथा—अलाय्यस्य परशुर्ननाश तम् ( ऋ॰ ९।६७।३० ) अत्र

वृत्तानुरोधात् एकादशाक्षरोऽपि पादः विकर्षेण द्वादशाक्षरः क्रियते अन्यथा वृत्तं हीयेत (१७।२२) एकादशाक्षरत्वे सति दशमाक्षरस्य शकारस्य गुरुत्वाभावात्। द्वादशाक्षरत्वे तु एकादशमक्षरम् 'श' इति भवत्येव लघु। वृत्तादेव 'अर्य्योगिरः सद्य आजग्मुषीः' (ऋ १।१२२।१४) इत्यत्र भवति पादच्छेदः।

एतेषामेव विशेषाणां सन्निपाते एकत्र समवाये तु पूर्व्वं निमित्तं पूर्व्वं भवति। परं निमित्तं परं भवति। पूर्व्वो हेतुरुत्तरात् बलीयानित्यर्थः। त्वष्टकर्थ मनवे स्योनान् (ऋ १० ७३।७) इत्यत्र प्रायोऽर्थयोर्विरोधे प्रायोबलीयस्त्वात् स्योनान् इति पादान्तः। प्रायोबलीयस्त्वादेव 'ऊर्द्ध्वो वाजस्य सनिता यदञ्जिभिः (ऋ १।३६।१३) इत्यत्र पादान्तः 'सनिता'। प्रायोवृत्तविरोधे प्रायोबलीयस्त्वात् 'प्रत्यग्रभोषम नृतमस्य नृणाम् (ऋ ५।३०।१२) इत्यत्र पादान्त एकादशाक्षर एव भवति। अर्थवृत्तविरोधे अर्थबलीयस्त्वात् 'यदग्ने स्यामहं त्वम्' (ऋ ८।४४।२३) इति पादान्तः, न तु वृत्तात् 'अहम्' इति। एवं सर्व्वत्र बलाबलम् अभिसमोच्य पादं जिज्ञासेत।

**अनुदात्तं तु पादादौ नोवर्जं विद्यते पदम्।**
**पादादावनुदात्तं तु यदन्यत्तदिहोदितम् ॥१७॥**

पादादौ उकारवर्जम् अनुदात्तं पदं न विद्यते। यानि तु अन्यानि अनुदात्तानि पदानि पादादौ भवन्ति तानि उदितानि अधस्तने श्लोके। यथा—उ लोककृत्नुमद्रिवो हरिश्रियम् (ऋ ८।१५।४), उ लोको यस्ते अद्रिवः (ऋ ३।३७।११)। अयमपि पादज्ञानहेतुरेव, सर्व्वत्र हेतुभ्यो बलवत्तमः।

**वशोऽसीयच्चसीत्येकं तृचे चाभिष्ट इत्यपि।**
**नेतिपूर्वाणि सर्वाणि मधुच्छन्दस्य तावधौ ॥१८॥**

वशे ऋषौ पादादौ अनुदात्तं पदमस्ति। यथा—इयत्तसि गाये त्वा नमसा गिरा ( ऋ॰ ८।४६।१७ )।

अभिष्टे ( ऋ॰ ४।१०।४-६ ) इत्येतस्मिन् तृचे नेतिपूर्वाणि नकारपूर्वाणि सर्वाण्येवानुदात्तानि। यथा—प्र ते दिवो न स्तनयन्ति शुष्माः ( ऋ॰ ४।१०।४ ), श्रिये रुक्मो न रोचत उपाके ( ऋ॰ ४।१०।५ ) तत् ते रुक्मो न रोचत स्वधावः ( ऋ॰ ४।१०।६ )।

मधुच्छन्दसि ऋषौ ऋतावृधौ इत्येकम् अनुदात्तमस्ति। यथा—ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ( ऋ॰ १।२।८ )।

**स्तोमशब्दे परेऽधाय्यृतशब्दे परे स्रिधत्।**
**हुवे तुराणां यत् पूर्वं त्वपन्मरुत उत्तरम् ॥१९॥**

स्तोमशब्दे परे 'अधायि' इत्येकमनुदात्तमस्ति। यथा—अधायि स्तोमः ( ऋ॰ ७।३४।१४ )।

ऋतशब्दे परे 'स्रिधत्' इत्येकमनुदात्तमस्ति। यथा—स्रिधदृतायोः ( ऋ॰ ७।३४।१७ )।

'हुवे तुराणाम्' इति द्विपदे यत् पूर्वं पदं 'हुवे' इति यावत् तदनुदात्तम्। यथा—प्रिया वो नाम हुवे तुराणाम् (ऋ॰ ७।५६।१०)।

'त्वपन्मरुत' इति द्विपदे यदुत्तरं 'मरुत' इति यावत् तदनुदात्तं भवति। यथा—आयत्तृपन्मरुतो वावशानाः ( ऋ॰ ७।५६।१० )।

**प्रेदं ब्रह्मेति चैतस्मिन् सूक्ते पादोऽस्ति पञ्चमः।**
**सर्वानुदात्तः षट् स्वृत्व्यादितश्च चतुर्दशः ॥२०॥**

'प्रेदं ब्रह्म वृत्रतूर्य्येष्वाविथ' ( ऋ॰ ८।३७ ) इत्येतस्मिन् सूक्ते सर्वानुदात्तः पादोऽस्ति पञ्चमः। यथा—वृत्रहन्नवेद्य।

अस्यैव सूक्तस्यादितः षट्सु ऋक्षु यश्चतुर्दशः पादः सोऽपि सर्वानुदात्तोऽस्ति। यथा—राजसि शचीपते ( ऋ० ८।३७।३ )।

**पादौ गायत्रवैराजावष्टाक्षरदशाक्षरौ।**
**एकादशिद्वादशिनौ विद्यात्त्रैष्टुभजागतौ ॥२१॥**

अष्टाक्षरदशाक्षरौ पादौ यथाक्रमं गायत्रवैराजौ विद्यात्। एकादशद्वादशाक्षरौ पादौ यथाक्रमं त्रैष्टुभजागतौ विद्यात्।

**वर्षिष्ठाणिष्ठयोरेषां लघूपोत्तममक्षरम्।**
**गुर्वेवेतरयोर्ऋक्षु तद्वृत्तं प्राहुश्छन्दसाम् ॥ २२ ॥**

एषां पादानां वर्षिष्ठाणिष्ठयोरष्टाक्षरद्वादशाक्षरयोः पादयोरिति यावत् उपोत्तममक्षरं सप्तममेकादशञ्चेति यावत् लघु भवति। यथा—अग्निमीळे पुरोहितम् ( ऋ० १।१।१ ), प्रदेवमच्छा मधुमन्त इन्दवः ( ऋ० ८।६८।१ )।

इतरयोर्दशाक्षरैकादशाक्षरयोः पादयोरिति यावत् उपोत्तममक्षरं नवमं दशमं चेति यावत् गुरु भवति। यथा—पिबा सोममभि यमुग्रतर्दः ( ऋ० ६।१७।१ ), श्रुधी हवं विपिपानस्याद्रेः ( ऋ० १।२२।४ )।

**एतैश्छन्दांसि वर्त्तन्ते सर्वाण्यन्यैरतोऽल्पशः।**
**एतद्विकारा एवान्ये सर्वे तु प्राकृताः समाः ॥२३॥**

एतैः पादैः सर्वाणि छन्दांसि वर्त्तन्ते। अतः एभ्यः अन्यैः पादैरल्पशो वर्त्तन्ते। ये त्वन्ये पादास्ते एतेषामेव विकारा भवन्ति। अष्टाक्षरात् पूर्वे ये पादास्ते गायत्रपादस्य विकारा भवन्ति। नवाक्षरो वैराजस्य विकारः यदि गुरूपोत्तमः। अन्यस्तु गायत्रस्यैव।

त्रयोदशाक्षरप्रभृतिषु ये गुरूपोत्तमास्ते त्रैष्टुभस्य ये, लघूपोत्तमास्ते जागतस्य।

सर्वे अष्टाक्षरप्रभृतयश्चतुर्विधाः प्राकृताः समास्तुल्या भवन्ति। किमुक्तं भवति—नान्योऽन्यस्य विकारा भवन्तीत्युक्तं भवति।

**एक एकपदैतेषां द्वौ पादौ द्विपदोच्यते।**
**ते तु तेनैव प्रोच्येते सरूपे यस्य पादतः ॥२४॥**

तेषां चतुर्णां पादानाम् अष्टाक्षरादीनाम् एकः पादः यस्याः सा एकपदा ऋक् इत्युच्यते। यथा—असिक्न्यां यजमानो न होता ( ऋ॰ ४।१७।१५ )।

तेषामेव चतुर्णां द्वौ पादौ यस्याः सा द्विपदा ऋगित्युच्यते। यथा—साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु (ऋ॰ १।७०।६)।

ते द्विपदैकपदे तेनैव छन्दसा प्रोच्येते छन्दसां मध्ये यस्य छन्दसः पादतः सरूपे भवतः। तथा च गायत्री एकपदा, गायत्री द्विपदा इत्येवं संज्ञा।

**न दाशतय्येकपदा काचिदस्तीति वै यास्कः।**
**अन्यत्र वैमद्याः सैका दशिनी मुखतो विराट् ॥२५॥**

दाशतये भवा दाशतयी काचित् एकपदा ऋक् वैमद्याः विमद-दृष्टाया अन्यत्र नास्तीति यास्काचार्यो वै मन्यते। वैमद्या एकपदा या सा तु मुखत आदावेव सूक्तस्य दशिनी दशाक्षरा एका विराट्। यथा—भद्रं नो अपि वातय मनः ( ऋ॰ १०।२०।१ )।

**आहुस्त्वेकपदा अन्या अध्यासानेकपातिनः।**
**अध्यासानपि ये केचित्त्वाहुरेकपदा इमाः ॥२६॥**

या एकपदास्ताः ऋचामध्यासान् अन्तान् एकपातिनः अङ्गानि मन्यन्ते ।

तान् एकपातिनः अध्यासान् अन्ये आचार्य्या एकपदा आहुः ।

**आ वां सुम्ने असिक्न्यां द्वे उरौ देवा सिषक्तु नः ।**
**पादा एकाधिकाः सन्ति छन्दसां चतुरक्षरात् ॥२७॥**

इमानि उदाहरणानि । आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम् ( ऋ॰ ६।६३।११ ), असिक्न्याम् यजमानो न होता ( ऋ॰ ४।१७।१५ ), उरौ देवा अनिबाधे स्याम ( ऋ॰ ५।४२।१७ ; ५।४३।१६ ), सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ॰ ५।४१।२० ) ।

**सन्त्यतिच्छन्दसां पादा एकोत्कर्षेण जागतात् ।**
**षोडशाक्षरपर्य्यन्ता एकश्चाष्टादशाक्षरः ॥२८॥**

छन्दसां पादाश्चतुरक्षरात् प्रभृति षोड़शाक्षरपर्य्यन्ताः । ते एकैकेनाधिकाः सन्ति । अतिच्छन्दसामपि जागतादारभ्य तथा । अष्टादशाक्षरस्तु एकः पादो वर्त्तते ।

**एकादशैव छन्दसि पादा ये षोडशाक्षराः ।**
**सर्वे त्रिकद्रुकीयासु नाकुलेऽष्टादशाक्षरः ॥२९॥**

छन्दसि संहितायां षोड़शाक्षराः पादाः एकादशैव वर्त्तन्ते । ते च सर्वे त्रिकद्रुकीयासु ( ऋ॰ २।२२ ) दृश्यन्ते । तथाच, त्रिकद्रुकेष्विति सूक्तस्य प्रथमायामृचि षोडशाक्षराः चत्वारः पादाः, द्वितीयायां त्रयः पादाः, चतुर्थ्याम् एकः, तृतीयायां त्रयः ।

अष्टादशाक्षरस्तु य एकः पादः स नकुलऋषिदृष्टे सूक्ते

वर्त्तते। यथा—अर्चामि सत्यसवं रत्नधामभिप्रियमतिंकविम् ( वाजसनेयसंहिता ४।२५ ; अथर्ववेद—संहिता ७।१४।१ )।

**अवमंह्योऽविकर्षेण ज्येष्ठा दाशतयीष्वृचाम्।**

**विकर्षेण तु पादैश्च स हि शर्ध इति स्मृता ॥३०॥**

अवमंह (ऋ॰ १।१३३।६) इत्येषा अविकर्षेण अव्यूहेन सप्तत्यक्षरा। सा ज्येष्ठा महती बह्वक्षरतमा दाशतयीषु ऋक्षु।

विकर्षेण तु 'स हि शर्ध' ( ऋ॰ १।१२७।६ ) इत्येषा षट्सप्तत्यक्षरा पादैश्चाष्टपदी भवति। तस्मात् ज्येष्ठा स्मृता।

**अणिष्ठा बहुपादानां भारद्वाजी पुरूतमम्।**

**अविकर्षेण सौभरी प्रेष्ठम्वोदि ह्रसीयसी ॥३१॥**

बहुपादानामृचां मध्ये अणिष्ठा अल्पाक्षरा भारद्वाजी भरद्वाजऋषिदृष्टा 'पुरूतमं पुरूणाम्' ( ऋ॰ ६।४५।२९ ) इत्येषा ऋक्। इयं च विंशत्यक्षरा। भारद्वाजीति ऋषिग्रहणात् 'पुरूतमं पुरूणाम् ईशानम्' ( ऋ॰ १।५।२ ) इति मा भूत्।

अविकर्षेण तु सोभरिणा ऋषिणा दृष्टा 'प्रेष्ठम् उ प्रियाणाम्' ( ऋ॰ ८।१०३।१० ) इत्येषा ऋक् ह्रसीयसी अल्पाक्षरतरा भवति। यत एकोनविंशत्यक्षरा एषा।

**विराजो द्विपदाः केचित् सर्वा आहुश्चतुष्पदाः।**

**कृत्वा पञ्चाक्षरान् पादांस्तास्तथाक्षरपंक्तयः ॥३२॥**

'पश्वा न तायुम् गुहा चतन्तम् ( ऋ॰ १।६५।१ ) इत्येवमादयो या विराजो द्विपदाः ताः सर्वाः 'पश्वा न तायुम्' इत्येवं पञ्चाक्षरान् पादान् कृत्वा चतुष्पदा आहुः केचिदाचार्य्याः। तास्तथा क्रियमाणा अक्षरपङ्क्तयो नाम भवन्ति।

# अष्टादशं पटलम्

बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः ।
एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो द्वृचौ ॥१॥

यस्य द्वृचस्य प्रथमा ऋक् बृहतीच्छन्दस्का द्वितीया च सतोबृहतीच्छन्दस्का स बार्हतः प्रगाथ उच्यते इत्यर्थः ।

यस्य च द्वृचस्य प्रथमा ऋक् ककुप्छन्दस्का द्वितीया च सतोबृहतीच्छन्दस्का स काकुभः प्रगाथ उच्यते इत्यर्थः । उदाहरणे परश्लोकेऽनुसन्धातव्ये ।

त्वमङ्ग प्र प्र वो यह्वं मा चिद्बृहदु गायिषे ।
बार्हताः काकुभानाहुस्तं गूर्धय वयम्विति ॥२॥

बार्हतप्रगाथस्योदाहरणानि—त्वमङ्गप्र (ऋ° १।८४।१९-२०), प्र वो यह्वम् (ऋ° ८।१३६।१-२), मा चित् (ऋ° ११-२), बृहदु गायिषे (ऋ° ७।८६।१-२)। काकुभप्रगाथानामुदाहरणानि—तं गूर्धय स्वर्णरम् (ऋ° ८।१९।१-२), वयम् उ त्वामपूर्व्या (ऋ° ८।२१।२)।

अनुष्टुब् द्वे च गायत्र्यावेष आनुष्टुभः स्मृतः ।
विराजावभिसम्पन्नः पद्याक्षर्यैः स उत्थितः ॥३॥

एका ऋक् अनुष्टुप्छन्दस्का द्वे च गायत्र्यौ गायत्रीच्छन्दस्के इत्येष तृच आनुष्टुभः प्रगाथ उच्यते इत्यर्थः । एष च प्रगाथः द्वे विराजे अभिसम्पन्नः पद्या चाक्षर्या च पादैरक्षरैश्च इत्यर्थः । दश पादाः सैका विराट् । अशीतिरक्षराणि । स इति प्रतीकम् । तथा च—स पूर्व्यो महानाम् (ऋ° ८।६३।१-२) इति उदाहरणम् ।

उत्थित इति प्रशंसा कृता। अन्ये प्रगाथाः षड्भिः सप्तभिरष्टाभिर्वा पादैर्भवन्ति, अयं तु दशभिः, तस्मात् उत्थित इति प्रशस्यते।

**आकृतिर्व्यपदेशानां प्राय आदित आदितः।**
**गायत्र्यादिस्तु बार्हते प्रायो गायत्रबार्हतः ॥४॥**

आदितः आद्याया ऋचः छन्दोऽनुसारेणैव प्रायेण प्रगाथा व्यपदिश्यन्ते इत्यर्थः।

गायत्र्यादि र्बृहत्यन्तः प्रगाथः प्रायेण गायत्रबार्हत उच्यते। यथा—तमिन्द्रं दानमीमहे ( ऋ॰ ८।४६।६-७ )।

**गायत्रकाकुभो नाम प्रायो भवति काकुभे।**
**औष्णिहस्तूष्णिहापूर्वः पंक्त्यन्तः पांक्तकाकुभः ॥५॥**

गायत्र्यादिः ककुबन्तः प्रगाथः गायत्रकाकुभो नाम वेदितव्यः। यथा—सुनीथो घास मर्त्त्य ( ऋ॰ ८।४६।४-५ )।

उष्णिहापूर्वः सतोबृहत्यन्तः प्रगाथः औष्णिह इत्युच्यते। यथा—यमादित्यासो अद्रुहः ( ऋ॰ ८।१८।३४-५ )।

पंक्त्यन्तः ककुप्पूर्वः प्रगाथः पांक्तकाकुभो नाम वेदितव्यः। यथा—अदान्मे पौरुकुत्स्यः ( ऋ॰ ८।१८।३६-७ )।

**तमिन्द्रं च सुनीथश्च यमादित्यास एव च।**
**अदान्मे पौरुकुत्स्यश्च ता ऋचोऽत्र निदर्शनम् ॥६॥**

गायत्रबार्हतादीनामुदाहरणप्रतीकानि। एतानि च पूर्वमेव यथास्थानं निर्दिष्टानि।

**महासतोबृहत्यन्तो यो महाबृहतीमुखः।**
**स महाबार्हतो नाम बार्हतो बृहतीमुखः ॥७॥**

महाबृहतीपूर्वः महासतोबृहत्यन्तः प्रगाथः महाबार्हत इत्युच्यते। यथा—बृहद्भिः रग्ने अर्चिभिः ( ऋ॰ ६।४८।७-८ )।

बृहतीमुखः बृहतीपूर्वः जगत्यन्तो यः प्रगाथः स बार्हत प्रगाथ इत्युच्यते। यथा—तं व शर्धं रथे शुभम् (ऋ॰ ५।५६।८—५।५७।१ )।

**जगत्यतिजगत्यन्तो यवमध्योत्तरोऽपि च।**

**बृहद्भिस्तं वो नेमिं च वामी वामस्य ता ऋचः ॥८॥**

तथाच अतिजगत्यन्तः यवमध्यान्तश्च बृहतीपूर्वः प्रगाथः बार्हत प्रगाथ एव भवतीत्यर्थः। यथा—नेमिं नमन्ति चक्षसा ( ऋ॰ ८।९७।१२-१३ ); वामो वामस्य धूतय ( ऋ॰ ६।४८।२०-२१ )।

बृहद्भिः, तं वः, नेमिम्, वामो वामस्य—इत्येतानि पुरस्तादेवो-दाहृतानां निदर्शनानां प्रतीकानि।

**न हि ते विपरीतान्तो मो षु त्वा द्विपदाधिकः।**

**अनुष्टुब् जगती चैव विश्वेषामिरज्यन्तं च ॥९॥**

बृहतीपूर्वः विपरीतान्तः प्रगाथः विपरीतान्त इत्युच्यते। यथा—"न हि ते शूर राधसः" ( ऋ॰ ८।४६।११-१२ )।

"मो षु त्वा वाघतश्च न" ( ऋ॰ ७।३२।१-२ ) इत्ययं प्रगाथः द्विपदाधिको नाम वेदितव्यः।

विश्वेषाम् इरजयन्तं वसूनाम् ( ऋ॰ ८।४६।१६-१७ ) इत्ययं प्रगाथः अनुष्टुप्पूर्वो जगत्यन्तो वेदितव्यः।

**द्विपदा बृहती चैव स नो वाजेष्विति स्मृतः।**

**ककुप्पूर्वस्तु को वेद स्मृतः काकुभबार्हतः ॥१०॥**

द्विपदापूर्वः बृहत्यन्तः 'स नो वाजेष्ववितां पुरूवसुः' ( ऋ॰ ८।४६।१३-१४ ) इत्ययं प्रगाथो द्वैपदबार्हतो वेदितव्यः।

ककुप्पूर्वो बृहत्यन्तः प्रगाथः काकुभबार्हतो नाम वेदितव्यः। यथा—"को वेद जानमेषाम्" ( ऋ० ५।५३।१-२ )।

**आनुष्टुभौष्णिहं विद्यात्ते म आहुर्य आययुः।**
**ते नस्त्राध्वं बृहत्यादिर्बार्हतानुष्टुभः स्मृतः ॥११॥**

अनुष्टुप्पूर्वम् उष्णिगन्तं प्रगाथम् आनुष्टुभौष्णिहं विद्यात्। यथा—'ते म आहुर्य आययुः ( ऋ० ५।५३।३-४ )

बृहतीपूर्वः अनुष्टुबन्तः प्रगाथः बार्हतानुष्टुभः स्मृतः। यथा—'ते न स्त्राध्वं तेव ( ऋ० ८।३०।३-४ )।

**अग्निं वः पूर्व्यमित्येषो अनुष्टुप् पंक्तिरेव च।**
**यदधिगावो अध्रिगू ककुप् च त्रिष्टुबेव च ॥१२॥**

अनुष्टुप्पूर्वः पङ्क्त्यन्तः प्रगाथः आनुष्टुभपाङ्क्तः स्मृतः। यथा—'अग्निं वः पूर्व्यं गिरा' ( ऋ० ८।३१।१४-५ )।

ककुप्पूर्वः त्रिष्टुबन्तः प्रगाथः काकुभत्रैष्टुभः स्मृतः। यथा—यदधि गावो अध्रिगू ( ऋ० ८।२२।११-२ )।

**यदद्या वामनुष्टुप् च त्रिष्टुप् चैवोपदिश्यते।**
**यत्स्थो दीर्घेति च त्वेषो बृहती त्रिष्टुबेव च ॥१३॥**

अनुष्टुप्पूर्वः त्रिष्टुबुत्तरः प्रगाथः आनुष्टुभत्रैष्टुभः स्मृतः। यथा—यदद्य वां नाम ( ऋ० ८।९।९-१० )।

बृहतीपूर्वः त्रिष्टुबुत्तरः पगाथः बार्हतत्रैष्टुभ इत्युच्यते। यथा—'यत्स्थो दीर्घ प्रसद्मनो ( ऋ० ८।१०।१-२ )

**आयन्मा वेनास्त्रिष्टुप् च जगती चोपदिश्यते।**
**ता वृधन्तावनुष्टुप् च महासतोमुखेव च ॥१४॥**

त्रिष्टुप्पूर्वः जगत्युत्तरः प्रगाथः त्रैष्टुभजागत इत्युच्यते। यथा—आयन्मा वेना अरुहन्नृतस्य ( ऋ० ८।१००।५-६ )।

अनुष्टुप्पूर्वः महासतोमुखोत्तरः त्रिराट्पूर्वत्रिष्टुबुत्तरः इत्यर्थः प्रगाथ आनुष्टुभत्रैष्टुभ इत्युच्यते। यथा—ता ह्यध्वन्तावनुद्यून् ( ऋ० ५।८५।५-६ )।

**जागतस्त्वददा अभां प्रगाथस्त्रिष्टुबुत्तरः।**
**उत्तरस्त्रैष्टुभस्तस्माज्जगत्युत्तर उच्यते ॥१५॥**

'अददा अभां महते वचस्यवे' ( ऋ० १।५१।१३ ४ ) इत्ययं प्रगाथः त्रिष्टुबुत्तरः जागत इत्युच्यते।

तस्मादुत्तरः प्रगाथः 'इदं नमो वृषभाय स्वराजे' ( ऋ० १।५१।१५—१।५२।१ ), इति यावत् जगत्युत्तरः त्रैष्टुभ इत्युच्यते।

**त्वमेताञ्जन च द्वौ द्वौ स घा राजेति च स्मृतौ।**
**त्वमस्य पारे रजसो जागतौ त्रिष्टुबुत्तरौ ॥१६ ॥**

'तमेताञ्जन' इति द्वौ प्रगाथौ 'तमेतां जन राज्ञो द्विदेश' ( ऋ० १।५३।८-१० ) इति 'उद्दचोन्द्रवेव गोपा' ( ऋ० १।५३ ११-५४।१ ) इति चेति यावत् पूर्ववत् द्रष्टव्यौ अर्थात् अनयोराद्यः जगतीपूर्वत्रिष्टबुत्तरः, अपरश्च त्रैष्टभजागतः इत्यर्थः। एवं च 'स घा' इति द्वौ प्रगाथौ 'स घा राजा' ( ऋ० १।५४।७-८ ) इति 'तुभ्यं देते बहुला' ( ऋ० १।५४।९-१० ) इति चेति यावत् द्वौ प्रगाथौ अपि पूर्ववत् द्रष्टव्यौ अर्थात् आद्यः जगती-पूर्वः त्रिष्टुबन्तः अपरश्च त्रैष्टुभजागत इत्यर्थः।

त्वमस्य पारे (ऋ० १।५२।१२-१३) रजसो व्योमन् (ऋ० १।५२।१४-१५) इति द्वौ प्रगाथौ त्रिष्टुबुत्तरौ जागतौ ज्ञेयौ।

**सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम् ।**

**व्यञ्जनान्युत्तरस्यैव स्वरस्यान्त्यं तु पूर्वभाक् ॥१७॥**

व्यञ्जनेन युक्तः, अनुस्वारेण सहितः, शुद्धो वापि अनुस्वारव्यञ्जनाभ्यां वा रहितः इत्यर्थः स्वरो अक्षरसंज्ञको भवति। व्यञ्जनानि उत्तरस्यैव परभूतस्यैव स्वरस्य अङ्गानि भवन्ति। अन्त्यं तु व्यञ्जनं पूर्वं स्वरं भजेत्। (१।१५)।

**विसर्जनीयानुस्वारौ भजेते पूर्वमक्षरम् ।**

**संयोगादिश्च वैवं च सहक्रम्यः परक्रमे ॥१८॥**

विसर्जनीयोऽनुस्वारश्च पूर्वमक्षरं भजते। संयोगादिर्वा एवं पूर्व्वमक्षरं भजते। क्रमेण सह क्रम्यो वर्णः पूर्वमक्षरं भजते वा परक्रमे सति। (१।१५)।

**गुर्वक्षरं लघु ह्रस्वं न चेत् संयोग उत्तरः ।**

**अनुस्वारश्च संयोगं विद्याद् व्यञ्जनसङ्गमम् ॥१९॥**

दीर्घमक्षरं गुरुसंज्ञकं भवति। ह्रस्वं च लघु यदि संयोगः अनुस्वारश्च तस्मात् अक्षरात् परो न भवति।

व्यञ्जनसमवायं संयोगं विद्यात्।

**गुरु दीर्घं गरीयस्तु यदि सव्यञ्जनं भवेत् ।**

**लघु सव्यञ्जनं ह्रस्वं लघीयो व्यञ्जनं विना ॥२०॥**

दीर्घमक्षरं गुरु। सव्यञ्जनं दीर्घमक्षरन्तु गरीयः। सव्यञ्जनं ह्रस्वमक्षरं लघु। व्यञ्जनरहितं ह्रस्वमक्षरन्तु लघीयः।

छन्दस्तुरीयेण समानसंख्यया
छन्दसोऽन्यस्य भवन्त्यृचोऽन्याः ।
यावत्तुरीयं भवति स्वमासां
तावता एता इतरा भवन्ति ॥२१॥

कस्य छन्दसः केन सह का सम्पद् भवतीति विचारणायां तत इदमुच्यते। छन्दस्तुरीयेण छन्दसो गायत्र्यादेः अक्षराणां चतुर्थभागेन समानसंख्यया अन्यस्य उष्णिक्छन्दस ऋचो भवन्ति। आसामुष्णिहां यावत् छन्दस्तुरीयं भवति तावत्य एता इतरा गायत्री भवन्ति। एवं सर्वेषां छन्दसाम् अन्योन्यस्य चतुर्थेन भागेन सम्पद् भवति। तथाच सप्त गायत्र्यः षट् उष्णिहो भवन्ति। 'यदिन्द्राहम् यथा त्वम्' (ऋ' ८।१४।१) इति यथा। आभिः सप्तभिः षड् उष्णिहो भवन्ति। एवं सर्वत्र।

द्वाभ्यामवस्येत्त्रिपदासु पूर्वं
पादेन पश्चात् क्वचिदन्यथैतत् ।
मध्येऽवसानं तु चतुष्पदानां
त्रिभिः समस्तैरवरैः परैर्वा ॥२२॥

त्रिपदासु ऋक्षु पूर्वं द्वाभ्यां पादाभ्याम् अवस्येत् अवसानं नयेत्। पश्चाच्च एकेनावशिष्टेन पादेनावसानं भवति। क्वचिच्च एतत् अन्यथा पूर्व्वमेकेन ततश्च द्वाभ्यामिति यावत् भवति। यथा—अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्॥ होतारं रत्नधातमम्॥ (ऋ' १।१।१)। दृतेरिव तेऽवृकमस्तु सख्यम्॥ अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः॥ (ऋ' ६।४८।१८)।

चतुष्पदानाम् ऋचां तु (१) मध्ये द्वाभ्यां पादाभ्यां अवसानं भवति। (२) यद्वा त्रिभिः समस्तैः अवरैः प्राग्भूतैः पादैः पूर्वमवसानं

भवति एकेन च अवशिष्टेन पादेन परमवसानं भवतीत्यर्थः। (३)यद्वा एकेन पादेन पूर्वमवसानं भवति परैः परभूतैः त्रिभिश्च पादैः ततोऽवसानं भवति। क्रमेणोदाहरणानि। यथा—(१)·गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः॥ ब्रह्माणस्त्वा शतक्रतो उद्वंशमिव येमिरे॥ (ऋ' १।१०।१) (२) एतं शंसम् इन्द्रास्मयुष्ट्वम् कूचित् सन्तम् सहसावन्न-भिष्टये सदा पाह्यभिष्टये॥ मेदतां वेदता वसो॥ (ऋ' १०।८३।११)। (३) अधीन्वत्र सप्तति च सप्त च॥ सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः॥ (ऋ' १०।८३।१५)।

पंक्त्यां द्विशो वा तत उत्तरेण
त्रिभिः परैर्वा विपरीतमेतत्।
द्विशस्त्रिशो वा परतश्चतुर्भिः
स्यात् षट्पदानामवसानमेतत् ॥२३॥

पंक्त्यां पञ्चपदासु ऋक्षु इत्यर्थः (१) द्विशः द्वाभ्यां द्वाभ्यां पादाभ्यामवसानं भवति। ततश्च उत्तरेण पञ्चमेनेति यावत् पादेनावसानं भवति। (२) यद्वा त्रिभिः परैः पादैरवसानं भवति आद्याभ्यां द्वाभ्याञ्च इत्यर्थः। (३) यद्वा विपरीतमेतत् अर्थात् पूर्वं त्रिभिः पादैरवसानं भवति परतश्चावशिष्टाभ्यां द्वाभ्यामित्यर्थः। क्रमेणोदाहरणानि यथा—(१) अयं चक्रम् इषणत् सूर्यस्य न्येतशं रीरमत् ससृमाणम्॥ आ कृष्ण ईं जुहुराणो जिघर्ति त्वचो बुध्ने रजसो अस्य योनौ॥ असिक्न्यां यजमानो न होता॥ (ऋ' ४।१७।१४-१५)। (२) नकिष्टं कर्मणा नशन् न प्रयोषन् न योषति॥ देवासो य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्॥ (ऋ' ८।३१।१७)। (३) नकिर्देवा मिनीमसि नकिरा योपयामसि मन्त्रश्रुत्यं चरामसि॥ पक्षेभिरपि कक्षेभिरत्राभि संरभामहे॥ (ऋ' १०।१३४।७)।

षट्पादानामेवं त्रिविधम् अवसानं स्यात्। तद् यथा—(१) द्विशः द्वाभ्यां द्वाभ्यां पादाभ्याम्, (२) त्रिशो वा त्रिभिः त्रिभिः पादैर्वा, (३) परतश्चतुर्भिर्वा परभूतैः चतुर्भिः पादैः आद्याभ्यां द्वाभ्याञ्च पादाभ्यामवसानं भवतीत्यर्थः। क्रमेणोदाहरणानि यथा—(१) विश्वान् देवान् हवामहे मरुतः सोमपीतये॥ उग्रा हि पृश्निमातरः॥ ( ऋ० १।२३।१०) (२) स त्वपः परिषस्वजे न्युस्रो मायया दधे स विश्वं परिदर्शतः॥ तस्य वेनीरनुव्रतमुषस्तिस्रो अवर्द्धयन्नभन्तामन्यके समे॥ (ऋ० ८।४१।३)। (३) निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः॥ त्रिते दुःष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥ ( ऋ० ८।४७।१५ )।

त्रिभिस्तु पूर्वं तत उत्तरं स्यात्
द्विशस्त्रिशो वा यदि वा समस्तम्।
द्वाभ्यां पुनः सप्तपदावसानं
द्वाभ्यां च मध्येऽष्टपदासु विद्यात् ॥२४॥

सप्तपादानां तु (१) पूर्वम् अवसानं त्रिभिः पादैः स्यात्। तस्मात् उत्तरं द्विशः द्वाभ्यां द्वाभ्यां पादाभ्याम्। (२) अथवा त्रिशः त्रिभिः पादैः पूर्वमवसानं भवति तदा उत्तरमवसानं समस्तैः चतुर्भिरेवावशिष्टैः पादैर्भवतीत्यर्थः। (३) द्वाभ्यां वा पादाभ्यां पूर्वमवसानं भवेत् अवशिष्टैः पञ्चभिश्च पादैः परमवसानं भवति। क्रमेणोदाहरणानि यथा—(१) सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे॥ आ राजाना दिविस्पृशास्मत्रा गन्तमुप नः॥ इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः॥ ( ऋ० १।१३७।१)। (२) न हि वां वव्रयामहेऽथेन्द्रमिद् यजामहे शविष्ठम् नृणां नरम्॥ स नः कदाचिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके समे॥ ( ऋ० ८।४०।२ )। (३) प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत॥ अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहास्माकं

बोधि चोदिता नभन्तामन्यकेषां ज्याका अधिधन्वसु ॥ (ऋ० १०।१३३।१)

अष्टपदासु ऋचु मध्ये द्वाभ्यां पादाभ्यां चतुर्थपञ्चमाभ्यामिति यावत् पूर्वमवसानं स्यात्। आद्यन्तयोश्च त्रिभिः त्रिभिः पादैरवसानं भवति। यथा—स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरा-स्विष्टनिरार्तनास्विष्टनिः। आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा। अधस्मास्य हर्षतो हृषीवतो विश्वे जुषन्त पन्थां नरः शुभे न पन्थाम् ॥ (ऋ० १।१२७।६)।

अग्निमीळे दृतैरिव गायन्त्रो तमधीन्विति।
अयं चक्रं नकिष्टं च नकिर्देवा मिमीनसि ॥२५॥
विश्वान् देवान् हवामहे स त्वपो निष्कं सुषुम।
न हि वां प्रो षु स हि शर्धश्च ता ऋचोऽव निदर्शनम् ॥

अग्निमीळ इत्यादीनि पादावसाने उदाहरणानां प्रतीकान्यत्र निर्दिश्यन्ते। पूर्णोदाहरणानि च यथास्थानमनुसन्धातव्यानि।

द्वाभ्यां पादेन द्वाभ्यां तु तव त्यत् पञ्चपदाष्टिः।
अव्यूहेनातिशक्वरी तृतीयः षोडशाक्षरः ॥२७॥

'तव त्यत्' (ऋ० २।२२।४) इत्यस्यामृचि प्रथमतो द्वाभ्यां पादाभ्यामवसानं कुर्यात्, ततश्च एकेन पादेन, ततश्च पुनर्द्वाभ्याम्। सेयम् ऋक् पञ्चपदा अष्टिः विज्ञेया। सा चेयं अव्यूहेन त्वं प्रवर्णैक-भाविनामपृथक्करणेन अतिशक्वरी भवेत्। अस्या ऋच स्तृतीयः पादस्तु षोडशाक्षरः। तथाच—तव त्यन् नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम्। यद् देवस्य शवसा प्रारिणा असुम् ऋणन्नपः ॥ भुवद् विश्वमभ्यादेवमोजसा विदादूर्जम् शतक्रतु र्विदादिषम्॥

चतुर्भिस्तत एकेनाग्ने तमद्येति च।
चतुर्भिस्तु परं द्वाभ्यां तव स्वादिष्ठा तच्छंयोः ॥२८॥

'अग्ने तमद्य' ( ऋ° ४।१०।१ ) इत्यस्यामृचि चतुर्भिः पादैः पूर्वमवसानं ततश्च एकेन पादेन। तथाच—अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्॥ ऋध्यामा त ओहैः॥

'तव स्वादिष्ठा' ( ऋ° ४।१०।५), 'तच्छंयोः' ( गृह्यसूत्र ३।५ ) इत्येतयोः ऋचोः चतुर्भिः पादैः पूर्वमवसानं ततश्च द्वाभ्यां पादाभ्याम्। तथाच—(१) तव स्वादिष्ठाग्ने सन्दृष्टिरिदाचिदह्न इदा चिदक्तोः। श्रिये रुक्मो न रोचत उपाके॥ (२) तच्छंयोरावृणीमहे, गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः, ऊर्द्ध्वं जिगातु भेषजम्॥ शं नो अस्तु द्विपदे शं चतुष्पदे॥

भरद्वाजाय तच्चक्षुरधीद्वृत्रा दृतेरिव।
एतासु न व्यवस्यन्त्येके द्वादशकादिषु॥२९॥

भरद्वाजाय ( ऋ° ६।४८।१३ ), तच्चक्षुः, ( ऋ° ७।६६।१६ ), अधीन् ( ऋ° १०।९३।१५ ), वृत्राः ( ऋ° ८।४।२१), दृतेरिव ( ऋ° ६।४८।१८ ) एतासु द्वादशकादिषु ऋक्षु एकेऽवसानं न कुर्वन्ति, अन्तरम् अवसानं न कुर्वन्तीत्यर्थः।

प्रशस्तृचः पंक्तिषु तु द्व्यृचौ वा
द्वे द्वे च पंक्तेरधिकाक्षरेषु।
एका च सूक्ते समयास्तु गण्याः
परावरार्ध्या द्विपदे यथैका॥३०॥

गतम् एतत् पूर्वम् ( १५।१४ )।

सूक्तस्य शेषोऽल्पतरः यदि स्यात्
पूर्वं स गच्छेद् यदि तु द्व्यृचो वा।
ते षष्टिरध्याय उपाधिका वा
सूक्ते समाप्ते यदि तेऽसमाप्ताः॥३१॥

गतमेतत् पूर्व्वम् ( १५।१५ )।

सर्वाणि भूतानि मनो गतिश्च
स्पर्शाश्च गन्धाश्च रसाश्च सर्वे ।
शब्दाश्च रूपाणि च सर्वमेतद्
त्रिष्टुब्जगत्यौ समुपैति भक्त्या ॥३२॥

सर्वाणि भूतानि मनः गतिः स्पर्शाः गन्धाः सर्वे रसाः शब्दाः रूपाणि च इत्येतत् सर्वं भक्त्या त्रिष्टुभजगत्यौ समुपगच्छति ।

गुर्वक्षराणां गुरुवृत्ति सर्वं
गुर्वक्षरं त्रैष्टुभमेव विद्यात् ।
लघ्वक्षराणां लघुवृत्ति सर्वं
लघ्वक्षरं जागतमेव विद्यात् ॥३३॥

यत् किञ्चित् स्थावरं जङ्गमं गुरुवृत्ति सत् सर्व्वं गुर्वक्षरम् । किं पुनर्गुर्वक्षरं त्रैष्टुमिति त्रैष्टुभपादोपोत्तमाक्षरस्य गुरुत्वात् (१७।२२)। यत् किञ्चित् स्थावरं जङ्गमं लघुवृत्ति तत् सर्वं लघ्वक्षरमेव विद्यात् । किं पुनर्लघ्वक्षरम् जागतमिति जागतपादोपोत्तमाक्षरस्य लघुत्वात् ।

यश्छन्दसां वेद विशेषमेतं
भूतानि च त्रैष्टुभजागतानि ।
सर्वाणि रूपाणि च भक्तितो यः
स्वर्गं जयत्येभिरथामृतत्वम् ॥३४॥

( स्वर्गं जयत्येभिरथामृतत्वम् ॥ )

यो ब्राह्मणः छन्दसामेतं विशेषं वेद भूतानि च त्रैष्टुभजागतानि च यो वेद सर्व्वाणि रूपाणि च यो भक्तितो वेद स स्वर्गं जयति एभिरमृतत्वम् एव ।

ॐ शान्तिः । ॐ शान्तिः ॥ ॐ शान्तिः ॥

# परिशिष्टम्

## छन्दसामक्षरसंख्यानिर्देशः

| छन्दः | प्रजापत्या | दैवी | आसुरी | आर्षी |
|---|---|---|---|---|
| गायत्री | ८ | १ | १५ | २४ |
| उष्णिह् | १२ | २ | १४ | २८ |
| अनुष्टुभ् | १६ | ३ | १३ | ३२ |
| बृहती | २० | ४ | १२ | ३६ |
| पंक्ति | २४ | ५ | ११ | ४० |
| त्रिष्टुभ् | २८ | ६ | १० | ४४ |
| जगती | ३२ | ७ | ९ | ४८ |

| छन्दः | यजुः | साम | ऋक् | ब्राह्म |
|---|---|---|---|---|
| गायत्री | ६ | १२ | १८ | ३६ |
| उष्णिह् | ७ | १४ | २१ | ४२ |
| अनुष्टुभ् | ८ | १६ | २४ | ४८ |
| बृहती | ९ | १८ | २७ | ५४ |
| पंक्ति | १० | २० | ३० | ६० |
| त्रिष्टुभ् | ११ | २२ | ३३ | ६६ |
| जगती | १२ | २४ | ३६ | ७२ |

## गायत्री

गायत्री— { ८ + ८ + ८ = २४
६ + ६ + ६ + ६ = [illegible] }

पदपङ्क्तिभुरिक्— { ५ + ५ + ५ + ५ + ५ = २५
५ + ५ + ५ + ५ + ६ = २६
५ + ५ + ५ + ४ + ६ = २५ }

गायत्री भुरिक्—८ + १० + ७ = २५

गायत्री विराट्—७+७+७=२१

गायत्री अतिनिचृत्—७+६+७=२०

गायत्री वर्द्धमाना— { ६+७+८=२१
                     { ८+६+८=२२

द्विपदा गायत्री ( जगती वा )—१२+१२=२४

गायत्री यवमध्या—७+१०+७=२४

गायत्री उष्णिग्गर्भा—६+७+११=२४

## उष्णिह्

उष्णिह्—८+८+१२=२८

पुर उष्णिह्—१२+८+८=२८

ककुभ्—८+१२+८=२८

ककुप न्यङ्कुशिरा निचृत्—११+१२+४=२७

उष्णिक् पिपीलिकामध्या—११+६+११=२८

तनुशिरा:—११+११+६=२८

उष्णिक् अनुष्टब्गर्भा—५+८+८+८=२९

## अनुष्टुभ

अनुष्टुभ्—८+८+८+८=३२

कृतिः—१२+१२+८=३२

पिपीलिकामध्या—१२+८+१२=३२

काविराज्—९+१२+९=३०

नष्टरूपा—९+१०+१३=३२

विराज्— { १०+१०+१०=३०
         { ११+११+११=३३

महापदङ्क्ति—५+५+५+५+५+६=३१

## बृहती

बृहती—८+८+१२+८=३६

पुरस्ताद्बृहती—१२+८+८+८=३६

उपरिष्टाद्बृहती—८+८+८+१२=३६

न्यङ्कुसारिणी—
स्कन्धोग्रीवी— { =८+१२+८+८=३६
उरोबृहती—

ऊर्ध्वबृहती विराट्—१२+१२+१२=३६

विष्टारबृहती—८+१०+१०+८=३६

पिपीलिकामध्यमा—१३+८+१३=३४

बृहती विषमपदा—९+८+११+८=३६

## पंक्ति

पंक्ति—८+८+८+८+८=४०

विराज्—१०+१०+१०+१०=४०

सतोबृहती—१२+८+१२+८=४०

विपरीता—८+१२+८+१२=४०

आस्तारपंक्ति—८+८+१२+१२=४०

प्रस्तारपंक्ति—१२+१२+८+८=४०

संस्तारपंक्ति—१२+८+८+१२=४०

विस्तारपंक्ति—८+१२+१२+८=४०

## त्रिष्टुभ्

त्रिष्टुभ्—११+११+११+११=४४

उपजगती—१२+१२+११+११=४६

अभिसारिणी—१०+१०+१२+१२=४४

विराट् स्थाना— { ९+९+१०+११ ३९
१०+१०+९+११=४०

विराट् पूर्वा
यद्वा पंक्त्युत्तरा
यद्वा महासती-
मुखा (१८।१४) } —१०+१०+८+८+८=४४

विराड्रूपा—११+११+११+८=४१

उपरिष्टाद् ज्योतिष्मती—१२+१२+१२+८=४४

पुरस्ताद् „ —८+१२+१२+१२=४४

मध्ये „ — { १२+८+१२+१२=४४
१२+१२+८+१२=४४

महाबृहती—८+८+८+८+१२=४४

यवमध्या—८+८+१२+८+८=४४

## जगती

जगती—१२+१२+१२+१२=४८

महापंक्ति— { ८+८+८+८+८+८=४८
८+८+७+६+१०+९=४८

महासतोबृहती—८+८+८+१२+१२=४८

## अतिछन्दांसि

( क )

| | | | | | |
|---|---|---|---|---|---|
| अतिजगती | ... | ५२ | अत्यष्टि | ... | ६८ |
| शक्वरी | ... | ५६ | धृति | ... | ७२ |
| अतिशक्वरी | ... | ६० | अतिधृति | ... | ७६ |
| अष्टि | ... | ६४ | | | |

( ख )

| | | | | | |
|---|---|---|---|---|---|
| कृति | ... | ८० | संकृति | ... | ९६ |
| प्रकृति | ... | ८४ | अभिकृति | ... | १०० |
| आकृति | ... | ८८ | उत्कृति | ... | १०४ |
| विकृति | ... | ९२ | | | |

## प्रगाथाः

१। बार्हत = बृहती + सतोबृहती — ( ८+८+१२+८ )+(१२+८+१२+८)

२। काकुभ = ककुभ् + ,, = ( ८+१२+८ )+( १२+८+१२+८)

३। आनुष्टुभ = अनुष्टुभ् + २ गायत्री = (८+८+८+८)+( ८+८+८)+(८+८+८)

४। गायत्रबार्हत = गायत्री + बृहती = (८+८+८)+(८+८+१२+८ )

५। गायत्रकाकुभ = गायत्री + ककुभ् = ( ८+८+८ )+(८+१२+८ )

६। औष्णिह = उष्णिक् + सतोबृहती = ( ८+८+१२ )+(१२+८+१२+८ )

७। पांक्तकाकुभ = ककुभ् + पंक्ति = (८+१२+८ )+(८+८+८+८+८ )

८। महाबार्हत = महाबृहती + महासतोबृहती = (८+८+८+८+१२)+(८+८+८+१२+१२)

बृहती + जगती = (८+८+१२+८)+( १२+१२+१२+१२ )

९। बार्हत = { बृहती (उपरिष्टात्) + अतिजगती (८+८+८+१२)+५२

बृहती + यवमध्या = (८+८+१२+८)+(८+८+१२+८+८ )

१०। विपरीतान्त = बृहती + विपरीता = (८+८+१२+८) + (८ +१२+८+१२)

११। द्विपदाधिका = (बृहती + सतोबृहती + द्विपदा) = (८+८+१२ +८) + (१२+८+१२+८) + (१२+८)

१२। (आनुष्टुभजागत) = अनुष्टुभ् (विराज्) + जगती = (१०+१० +१०) + (१२+१२+१२+१२)

१३। (द्विपदबार्हत) = द्विपदा (बृहती) + बृहती (पिपीलिकामध्या) = (१२+१२) + (१३+८+१३)

१४। काकुभबार्हत = ककुभ् + बृहती = (८+१२+८) + (८+८+ १२+८)

१५। आनुष्टुभौष्णिह — अनुष्टुभ् + उष्णिह् = (८+८+८+८) + (१२+८+८)

१६। (बार्हतानुष्टुभ) = बृहती + अनुष्टुभ् = (८+८+१२+८) + (८+८+८+८)

१७। (आनुष्टुभपांक्त) = अनुष्टुभ् + पंक्ति = (८+८+८+८) + (८+८+८+८+८)

१८। (काकुभत्रैष्टुभ) = ककुभ् + त्रिष्टुभ् (ज्योतिष्मती मध्ये) = (८+१२+८) + (१२+८+१२+१२)

१९। (आनुष्टुभत्रैष्टुभ) = अनुष्टुभ + त्रिष्टुभ् = (८+८+८+८) + (११+११+११+११)

२०। (बार्हत त्रैष्टुभ) = बृहती + त्रिष्टुभ् (ज्योतिष्मतीमध्ये) = (८+८+१२+८) + (१२+८+१२+१२)

२१। (त्रैष्टुभ जागत) = त्रिष्टुभ् + जगती = (११+११+११+११) + (१२+१२+१२+१२)

२२। (आनुष्टुभत्रैष्टुभ) = अनुष्टुभ् + महासतोमुखा = (८+८+८ +८) + (१०+१०+८+८+८)

२३। जागत = जगती + त्रिष्टुभ् = (१२+१२+१२+१२) + (११ +११+११+११)

२४। त्रैष्टुभ = त्रिष्टुभ् + जगती = (११+११+११+११) + (१२ +१२+१२+१२)

# पारिभाषिक-शब्दसूची